श्रीः ।

# अमरुशतकम् ।

अमरुराजकायावेशानुभूतशृङ्गारैः

श्रीशंकराचार्यैर्विरचितम् ।

ज्ञानानन्दकृतशृङ्गारशान्तरसद्वयबोधिन्या

कामदया टीकया सहितम् ।

सटीकघटकर्परकाव्यसंयुतं च.

ऐनापुरेउपाख्यवैद्यवासुदेवशास्त्रिभिः संशोधितम् ।

तदेतत्पुस्तकं

श्रीवेङ्कटेश्वरमुद्रालयाधिपतिना—

श्रीकृष्णदासात्मजखेमराजश्रेष्ठिना

मुम्बय्यां

"प्रबोधरत्नाकर"मुद्रायन्त्रालये

अङ्कयित्वा प्रसिद्धिमनायि.

शकाब्दाः १८१६ विक्रमसंवत् १९५१

श्रीः

# अमरुशतकम् ।

अमरुराजकायावेशानुभूतशृङ्गारैः

श्रीशंकराचार्यैर्विरचितम् ।

ज्ञानानन्दकृतशृङ्गारशान्तरसद्वयबोधिन्या

कामदया टीकया सहितम् ।

सटीकघटकर्परकाव्यसंयुतंच.

ऐनापुरेउपाख्यवैद्यवासुदेवशास्त्रिभिः संशोधितम् ।

तदेतत्पुस्तकं

श्रीकृष्णदासात्मजखेमराजश्रेष्ठिना

मुम्बय्यां

"प्रबोधरत्नाकर" मुद्रायन्त्रालये

अङ्कयित्वा प्रसिद्धिमनायि.

शकाब्दाः १८१६ विक्रमसंवत् १९५०

श्रीः ।

# प्रस्तावना.

इयमत्र कथोपलभ्यते आसंश्चात्रावनितले स्वधर्मावनाय नास्तिकमतखण्डनगृहीतमनुजविग्रहाः शंकराचार्याः केरलेषु। यदाचेमे पृथिवीतले सर्वनास्तिकजनमतखण्डितुकामा व्यचरंस्तदा च पण्डितो मण्डनमिश्रो नाम कश्चन सर्वशास्त्रविशारदः शारदापतिरिवाभूत्तेन च साकमिमे यदा वादायादरं कृतवन्तस्तदा तस्मिन्वादे मण्डनमिश्रमधिश्रिता तत्स्त्री सरस्वती तान्कामशास्त्रे पराजितवती तदा तस्या मासत्रयमवधिमाधाय कस्य चिन्मृतस्यामरुनाम्नो राज्ञः शरीरे योगेन प्रविश्य तस्य स्त्रीशतमानन्दमुपभुज्य कामशास्त्रं कामतो विचार्यैनमरुशतकं नाम ग्रन्थमकुर्वन् तथा चोक्तं शंकरदिग्विजये माधवाचार्यैः—

मनसिजकलातत्त्वाभिज्ञोमनोज्ञविचेष्टितः
सकलविषयव्यावृत्ताक्षः सदानुसृतोत्तमः।
कृतकुचगुरूपास्त्यात्यन्तं सुनिर्वृतमानसो
निधुवनपरब्रह्मानन्दं निरर्गलमन्वभूत् ॥

एवमनुभूतानन्दतां कथयित्वा—

वात्स्यायनप्रोदितसूत्रजातं
तदीयभाष्यंचनिरीक्ष्यसम्यक् ।
स्वयंव्यधत्ताभिनवार्थगर्भं
निबंधमेकंनृपवेषधारी ॥

सएवायं ग्रन्थोमरुशतकं नामेति वदन्ति अत्र च शृंगारः साक्षात् सम्यक्तया स्वरूपतोऽदर्शि ।

एतद्ग्रंथोपरि च स्वामिसदानन्दकृता टीका शृंगाररसवैशारदी विद्यते परमपि वेदान्तानुकूलाऽन्यापि व्याख्या तैः शंकरस्वाम्यनुगामिशृंगाररसानास्वादनशीलानपि भक्त्यु त्पादायकृता । एवं टीकाद्वयोपेतमेतत्काव्यममरुशतकं संशोध्य मुद्रितमत्र ग्राहकैर्ग्रहणेन प्रोत्साहनीयमस्मानेवमेवान्यपुस्तकमुद्रणे । अग्रे च घटकर्परमपि काव्यं विक्रमार्कराजसभानवरत्नराजिविराजितकविवरघटकर्परनामधारिणैव प्रणीतं सटीकं मुद्रितमस्तीति साक्षाद्दृष्टृभिर्द्दश्यत एवेत्यलम् ।

**खेमराज श्रीकृष्णदास.**

श्रीवेंकटेश्वर छापखाना.

**मुंबई.**

# अमरुशतकं

## कामदया टीकया सहितम्.

---

॥ श्रीगणेशाय नमः ॥ ज्याकृष्टिबद्धखटकामु खपाणिपृष्ठप्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः । त्वां पातु मञ्जरितपल्लवकर्णपूरलोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १ ॥

श्रीगणेशाय नमः ॥ विद्या वितरति मुक्तिं भुक्तिमविद्या च तां भजिष्यामः । या च रमा चरमा या शक्तिः सा नः शिवं दिशतु ॥ १ ॥ तदुभयरसपरिपाटी परिहृतबाटीमिमां रम्याम् । कुरुतेऽमरुशतटीकां ज्ञानानन्दः कलाधारः ॥ २ ॥ योऽसौ भाग्यवता त्रिभक्तवलितज्ञानामृतानन्दथुर्यो वात्स्यायनकामतन्त्रविलसत्केलिक्रियाकौशलः । व्याचक्षेऽत्र रसद्वयं कविकुलालंकारचूडामणिः श्रीलश्रीरविचन्द्र एष पिशुनां मात्सर्य्यतामुत्सृजन् ॥ ३ ॥ यदि स्यात्परमानन्दे कामानन्दे च वासना । तदा संसेव्यतां धीराष्टीकेयं कामदा सदा ॥ ॥ ४ ॥ क्व चातिकर्कशः शान्तः क्व चातिललितः शुचिः । एकत्र वाक्ये व्याख्यातुस्तावहो कौशलं कवेः ॥ ५ ॥

शृङ्गारपक्षः । निर्विघ्नप्रारिप्सितशतकसमाप्तिकामो ग्रन्थ-

कृदिष्टदेवतां कीर्त्तयन्नाह ॥ ज्येति ॥ अम्बिकायाः पार्वत्याः कटाक्षोऽपाङ्गदर्शनं त्वां पातु रक्षतु अत्र संबोधनपदेऽप्यनुक्ते युष्मच्छब्देनापेक्ष्यते। स किम्भूतः ज्या धनुर्गुणस्तस्याकृष्टिराकर्षणं तत्र बद्धं खटकामुखं नाम अङ्गुलिरचनाविशेषस्तेन पाणिपृष्ठे प्रेङ्खन् संसक्तीभवन्यो नखांशुचयस्तेन संवलितः मिश्रितः। पुनः किम्भूतः। मञ्जरितः पल्लवः मञ्जरीयुक्तः किसलयो यत्र कर्णपूरे तत्र लोभेन भ्रमन्यो भ्रमरस्तस्य विभ्रमो विलासस्तद्भृत् तत्सदृश इत्यर्थः। पल्लवस्य नखांशुना भ्रमरस्य कटाक्षेणच साम्यम्। किंवा वास्तवे पार्वतीकर्णपूरपल्लवे भ्रमरायमाणः कटाक्ष इति अत्र पक्षे नखांशुचयसंवलितविशेषणमप्रयोजनकं। किंवा आकर्णमाकर्षणं धनुर्गुणस्येति ध्वन्यते "चक्षुःप्रीतिर्मनःसंगः' इत्यादिषोडशशृङ्गाराणां मध्ये चक्षुःप्रीतेराद्यत्वात् प्रथमतः कटाक्षवर्णनम्।

**अथ शान्तिपक्षः** ननु शृङ्गारशतमिदमित्यस्य प्रसिद्धेः कथं शान्तिरसोऽत्र। तत्र उच्यते। भगवान् शंकराचार्य्यो दिग्विजयच्छलेन काश्मीरमगमत्। तत्र शृङ्गाररसवर्णनार्थं सभ्यैरभ्यर्थितः "शृङ्गारी चेत् कविः काव्यजातं रसमयं जगत्" इति वचनादित्यमरुनाम्नो राज्ञो मृतस्य परवपुःप्रवेशविद्यया शरीरे प्रवेशं कृत्वा स्त्रीशतेन सह केलिं विधाय प्रातस्तथा कारयामास। पिशुनैः कापटिकोऽयमाजन्मब्रह्मचारीत्युपहसितः शान्तिरसमत्र व्याचष्टे इति किंव-

दन्त्यतः शान्तिरसमत्र व्याचक्ष्यते शान्तस्य मोक्षसाधनत्वा-त् । विष्णुमायायां प्रसन्नायां लभ्यते। तथा च "सैषा प्रस-न्ना वरदा"इतिव्यासवचनमाश्रित्याह अम्बिकाया महामाया-याः कटाक्षस्त्वां पातु रक्षतु ज्या पृथ्वी माता वा 'ज्या मौर्वी-मातृभूमिषु' इति विश्वः। तत्राकृष्टिः सम्बद्धस्तया बद्धाः सां-सारिकाः तएव खटकामुखपाणिपृष्ठप्रेङ्खन्नखांशुचया इति रू-पकम् अस्थिरत्वात्। तैः संवलितः स्पृष्टः। किंवा ज्याकृष्टयः पुराणपण्डिताः सांसारिकास्तेषां बन्धने खटकं व्यापकं यत् आमुखं सन्धिः तस्य पाणिपृष्ठे तेषान्नखांशुचय इव संवलितः संसक्तः।'खटकाङ्क्षायाम्'धातुः आमुखशब्दो नाटकसन्धौ प्र-सिद्धःअत्र लाक्षणिकः।पुनःकिंभूतः मञ्जरितो बहुलीकृतःपल्लवः पदनं पत् तस्य लवो व्यवसायलेशः स चासौ कर्णपूरश्चेति कर्णं पूरयति सुखदत्वात् एवंभूतो यो लोभस्तत्र भ्रमन् यो भ्रमरो मिथ्याज्ञानं स एव विभ्रमोन्धकारस्तं बिभर्त्तीति । भ्रमो मि-थ्याज्ञानं यत्र स चासौ रः कामश्चेति'रः स्यात्कामेऽनिले वह्नौ' इति।तस्य विभ्रमोऽन्धकारस्तं बिभर्त्तीति। किंवा भ्रमं राति द-दाति तं यो बिभर्त्तीति एतेनास्थिरः संसारः लोभोऽप्यन्धकार इति ध्वन्यते ॥ १ ॥

क्षिप्तोहस्तावलग्नःप्रसभमभिहतोऽप्याददानोंशु
कान्तंगृह्णन्केशेष्वपास्तश्चरणनिपातितो नेक्षि
तः संभ्रमेण ॥ आलिङ्गन्योऽवधूतास्त्रिपुरयुवति

भिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दह
तु दुरितं शाम्भवो वः शराग्निः ॥ २ ॥

शृङ्गारपक्षे। पार्वतीं स्तुत्वा शिवं स्तुवन्नाह॥ क्षिप्त इत्यादि॥ शाम्भवः शराग्निः वो युष्माकं दुरितं पापं दहतु भस्मीकरोतु। किंभूतः त्रिपुरनाम्नोऽसुरस्य युवतिभिः कान्ताभिः क्षिप्तः सन् हस्तावलग्नः प्रसभं बलात्कारेणाभिहतो वस्त्रान्तं गृह्णन् सन् केशेषु गृह्णन् अपास्तो वारितः। चरणनिपतितः सन् भ्रमेण न दृष्टः आलिङ्गन् सन् अवधूतः कम्पायितः। किंभूताभिः साश्रुनेत्रोत्पलाभिः शोकात् त्रिपुरदाहे शम्भोः शराग्निर्यथा त्रीणि पुराणि ददाह तथा त्रिविधं दुरितं दहतु इति ध्वन्यते। कइव आर्द्रापराधः नूतनदोषः कामीव आर्द्रशब्देन लक्षणया तत्तत्कालीन उच्यते। अथ च कामो युवतिभिर्हस्तावलग्नः सन् क्षिप्तः युवतिभिरित्येकदेशेन। अन्यत्समानार्थं। अत्राग्निरिव दृष्टो नायको मानिन्या क्षिप्तोऽपि हस्तावलग्नः अभिहतोऽपि वस्त्रान्तं गृह्णन्। एवमन्यत्रापि अपिशब्देन योजना साश्रुनेत्रोत्पलाभिरित्यनेन मानाऽतिशयत्वं ध्वन्यते। मानोऽपि कामवर्द्धक इति प्रथमतो मानिनीवर्णनम्॥

शान्तपक्षे शान्तानां पारंपर्य्याश्रितशान्तरूपं दर्शयति। अवधूतनामा भागवतः पुरुषः वः युष्माकं दुरितं दहतु किंभूतं कामि अभिलाषयुक्तं कीदृशः क्षिप्त उन्मत्तवेषः आत्म-

गोपनाय अवधूता उन्मत्तवेषा भवन्तीति अहस्ताऽवलग्नः अहस्ता दिवसत्वं प्रकाशस्तत्रावलग्नः। किंवा अः विष्णुस्तस्य हस्तेऽवलग्नः विष्णुना गृहीत इत्यर्थः। किंवा हस्तं नक्षत्रं अवतीति हस्तावश्चन्द्रस्तत्र लग्नः। योगिनो हि शुक्ररक्षणपरा भवन्तीति। किंवा हस्तावलम्बः करपात्रः। अभिहतः सम्यग्ज्ञानशाली। हन्तेर्गत्यर्थत्वात्। यद्यपि हन्तेर्गमनार्थप्रयोगाभावः तथापि श्लेषे दोषाभावः। अंशुकान्तं कौपीनं गृह्णन् प्रशस्तोंशुरंशुक इति तस्यान्तं समीपं प्राप्नुवन् तत्तेजः पश्यन्निति वा। कामेन्द्रियं तस्य ईशा विषयास्तेषु रसगन्धादिषु अपास्तो वारितः चरणं वेदभागस्तत्र निपतितः प्रसन्नः वैदिकाचारभूषकः आलिङ्गन् रलयोरैक्यात् रिगिर्गत्यर्थः। सम्यक्भ्रमणशाली ज्ञानशाली एवंभूतोऽवधूतश्चेति अतएव त्रिभुवनयुवतिभिर्भावोदयात् साश्रुभिरपि ईक्षितो विषयेष्वासक्तः पुरुषो भवतीति। कइव शाम्भवः शराग्निरिव दुर्द्धर्षत्वात् कामिवाद्रीपराधः कानि इन्द्रियाणि तेषां अमीवं पापं तेनार्द्रां स्निग्धां अपरां शक्तिं धारयतीति। द्वे शक्ती भवतः परा चापरा च अमीवशब्दो दुरितवचनो भारते बहुधा दृष्टः॥ २॥

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कु-
ण्डलं किंचिन्मृष्टविशेषकं तनुतरैः स्वेदांभसः
शीकरैः। तन्व्या यत् सुरतान्ततान्तनयनं वक्रं

रतिव्यत्यये तत्त्वां पातु चिराय किं हरिहरब्रह्मा
दिभिर्दैवतैः ॥ ३ ॥

शृङ्गारपक्षे सहजशृङ्गाराख्यं मानमुपवर्ण्य विपरीतसुरतं वर्णयन्नाह ॥ आलोलामित्यादि । तन्व्याः क्षीणाङ्ग्याः रतिव्यत्यये विपरीतरतौ यद्वक्त्रं तत् त्वां पातु रक्षतु किं हरिहरब्रह्मादिभिर्दैवतैरलम्। कीदृशं वक्त्रं अलकावलीं बिभ्रत् आलोलां चञ्चलां विलुलितां एतेन पुरुषायितत्वं व्यज्यते । चलत्कुण्डलमित्यनेनापि कम्पं व्यज्यते । स्वेदाम्भसो घर्म्मस्य कणैः किञ्चिदीषत् मृष्टं विशेषकं प्रोञ्छिततिलकं यत्र तनुतरैरल्पतरै एतेनोत्तमः स्वेदः नायिकासूत्तमत्वं व्यज्यते । यदुक्तं । "स्वेदो हि त्रिविधः प्रोक्त उत्तमाधममध्यमः । श्रमे महति योऽत्यल्प उत्तमः स प्रकीर्त्तितः। ललाटे गण्डयोः क्वापि चिबुके चापि दृश्यते । श्रमानुरूपः स्वेदो यो मध्यमः स प्रकीर्त्तितः । स ललाटशिरोग्रीवावक्षोदेशेषु जायते । अल्पश्रमे महास्वेदोऽत्यधमः सर्वदेहगः" ॥ सुरतान्ते क्रीडान्ते तान्तनयनं ग्लाननेत्रं । तनुग्लानौ तान्तमिति । एवंभूतं कामिनीमुखं यदि संमुखीभवति किं देवैः स्वर्गफलदैरित्यातिशयत्वं मुखे व्यज्यते ॥

शान्तपक्षे तन्व्या मायाया रतिव्यत्यये क्रीडापगमे सति यन्मुखं तदेव तस्य भवति तत् त्वां पातु रक्षतु किंदेवैः। 'यद्येषोपरता देवी माया वैशारदी मतिः । ससंपन्ना एव विदुर्म्महिम्न

स्ते महीयते"इति भारतवचनान्मायाव्यपगम एवमोक्षकारणं सूचितं। आलोलामलकावलीं बिभ्रत्संस्काररहीनत्वात् चलत्कुण्डलं अवधूताश्चेदकुण्डलिनो भवन्ति घर्म्मजलेन ग्लिष्टपुलकं प्राणायामात् घर्म्मः स्यादिति योगशास्त्रं सुरतान्तस्येव तान्तनेत्रं अन्यदृष्टेरक्षमत्वात् ॥ ३ ॥

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैःक्षणमभि
मुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ॥ हृदयनिहि
तंभावाकूतंवमद्भिरिवेक्षणैः कथय सुकृती कोयं
मुग्धे त्वयाद्य विलोक्यते ॥ ४ ॥

शृङ्गार० पूर्वं कटाक्षं वर्णयित्वा संप्रति दृष्टिं वर्णयन्नाह ॥अलसेति॥ हेमुग्धे बाले " मुग्धानववधूस्तत्र नवयौवनमण्डिता। नवालंकारहृष्टा च लज्जाप्राया वृतिर्यथा"इतिरुद्रः। तत्कथय कः सुकृती त्वयाऽद्य विलोक्यते कैरीक्षणैर्दर्शनैः। किंभूतैरलसमालस्यं तेन वलितैः तत्संपृक्तैः प्रेमातिशयास्निग्धैर्मुहुर्वारंवारं मुकुलीकृतैः संकुचितैः। क्षणमभिमुखैः लज्जालोलैश्चञ्चलैः क्षणमित्यनेनान्वयः। एतेन बाला नायिकेति व्यज्यते। तथा च कौतुकमस्ति भयमस्ति उत्कण्ठा चात्र उपेक्ष्यते। हृदयनिहितं भावाकूतं वमद्भिरुद्गिरद्भिरिव कौतुकादालस्यं भयात्संकोच उत्कण्ठया निमेषराहित्यम् ॥

शान्तपक्षे कामिनमधिक्षिपति। हेमुग्ध हेमूढ इत्यन्वयः। इः कामस्तस्य भाव इत्वं तं याति गच्छति अद्य कोऽयं

ब्रह्माऽयं सुकृती पुण्यवान् शान्तो विलोक्यते । किंभूतः इक्षणैश्चक्षुभिरुपलक्षितः किंभूतैः अरसवलितैः रसः शृङ्गारः मुख्यत्वात्तत्र न संसक्तैः । अथ वा अः विष्णुस्तत्र रसेन वलितैः अन्यत्समानं एतादृग्नयनं अवधूतस्यापि भवतीति ॥ ४ ॥

दत्तोऽस्याः प्रणयस्त्वयैव भवता चेयं चिरं लालि
ता दैवादद्य किल त्वमेव कृतवानस्यानवंविप्रियं।म
न्युर्दुस्सह एव यात्युपशमं नो सान्त्ववादैः स्फुटं हे
निस्त्रिंशविमुक्तकण्ठ करुणं तावत्सखो रोदितु॥५॥

शृङ्गार०बालां मानिनीं वर्णयन्नाह दत्त इत्यादि ॥ चतुरा सखी वदति हे निस्त्रिंश हे निःशङ्क तावत्सखी रोदितु विमुक्तकण्ठञ्च तत्करुणञ्चइति यथा स्यात्तथा । कथमित्याह अस्याः प्रणयः प्रेमाश्रयः त्वयैव दत्तः भवतैव इयं चिरं लालिता वर्द्धिता अद्य दैवात् दैवयोगात् अस्याः नवं नूतनं विप्रियं त्वमेव कृतवान् एष मन्युः क्रोधो दुःसहः सान्त्ववादैः प्रीतिवचनैः समं न याति सान्त्ववादाः कोपस्य प्रत्युद्दीपनहेतवः तत् रोदित्वेव एतेन तस्या रोदनेन लोकप्रचारो भवतु इचि चातुर्य्यं व्यज्यते । बाला केवलमेव रोदिति इति अस्यां बालत्वं व्यज्यते ॥

शान्तपक्षे हे विमुक्त हे निःशङ्क कृतं सत्यत्वं वानसिगच्छन्नसि यात्युपशमं याति ज्ञानं याप्रापणे धातोर्गत्यर्थे-

त्वात् ज्ञानार्थत्वं। तेनोपशमं शान्ति। किंभूतं विप्रियमिष्टमि-त्रादीत्युक्तं। असीत्यस्यान्ते आ इति विषादे। नवं प्रत्यग्रं दैवाद्दिव्यं भाग्यमस्तीति दैवात्कर्म्मविशेषो हि भाग्यमुक्तस्त-त्कर्म्मक्षयादेव अस्या मायायाः प्रणयस्त्वया दत्तः चिरं लालिता च इयं अद्य त्वं शान्तोसि एष मन्युर्दुःसहस्त-न्नोऽस्माकं सखी माया रोदितु किंभूतमुपशमं सान्त्ववादैः प्रियवचनैः स्फुटं व्यक्तकण्ठं करुणं च स्थितदयं। 'सर्वभूतदयायुक्तः प्रियवाक् प्रियदर्शनः' इति भागवतलक्षणं तत् सूचितं तुष्टिपुष्टिलक्ष्मीप्रभृतयो मायासख्यः॥ ५॥

**लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो निरा**
**हारास्सख्यःसततरुदितोच्छूननयनाः॥ परि**
**त्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था**
**चेयं विसृज कठिने मानमधुना॥ ६॥**

शृंगार० सखीं वर्णयन्नाह लिखन्नित्यादि॥ मानिनीं सखीं प्रसादयति। तदुक्तं "विनोदो मण्डनं शिक्षोपालम्भोऽथ प्रसादनं। सङ्गमो विरहाश्वासः सखीकर्म्मेति यद्यथा॥" हेक-ठिने अधुना इदानीं मानं त्यज कथमित्याह तव प्राणदयितो बहिरास्ते किंकुर्वन् भूमिं लिखन् अकारणमेव लिखति अवनतोऽधोमुखः सख्योपि निराहारा आहरणमाहारः तेन रहिता भवन्ति तत्कर्षणाक्षमा आहाररहिता वा। निराधारा इतिपाठे आश्रयहीना भवन्तीति। मानिनीप्रियोप्यनतः

कमाश्रित्य स्थास्यतीति सर्वथा क्रन्दने सशोकनयनाः पञ्जरशुकैः केलिकरैरपि हसितपठितं परित्यक्तं हसितकारि पठितं मध्यपदलोपी समासः। तव चेयमवस्था मलिनवस्त्रादिना। कठिने इत्यनेन मानस्य गुरुत्वं। तदुक्तं 'अवेक्ष्य दोषमेतस्य गरीयान्मध्यमो लघुः' इति मानस्य त्रैविध्यमुक्तम्॥

शान्तपक्षे हेकठिन हेसंसारनिस्पृह इमानं कामाहङ्कारं त्यज। कुतस्त्यक्तव्यमित्याह पञ्जरशुकैः सह तव सितपठितं हेति पादपूरणे। सितं वधस्तस्य साधितं पठितं पाठः न केवलं पाठः अवस्थादशा च किंभूतं परिभिः परज्ञानशीलैस्त्यक्तं भर। कथं कामस्त्याज्यः शान्तिरस आश्रयितव्य इत्याह आः कष्टे। हेनिराहार निरन्नपान निराकर्षण वा आः सततरुदितोच्छूननयना पुमान् ईश्वर आस्ते। नतो निषेधात् बहिर्न्निषेधशेषो यत्र तादृश इति। भागवतः पुनः किंभूतः प्राणदयितः अतिप्रेयान्सख्यः ख्यानं ख्यास्तेन सह वर्त्तते इति। लिखन् अर्थात् शुभाशुभकर्म्मणि स साक्षी सर्व्वकर्म्मणामित्यस्ति ईश्वरः सर्व्वं कर्मसाक्षी आस्ते ततः कामं परित्यज्य शान्तो भूत्वा भूमिं उत्पत्तिं अव रक्ष पुनर्म्मरणं मा गा इति संक्षेपः॥ ६॥

नार्य्यस्तान्विहठाद्धरान्तिरमणंतिष्ठन्तिनोवारिता
स्तात्किताम्यासिकिंचरोदिषिसुधातासांप्रियंमा
कृथाः। कान्तःकेलिरुचिर्युवासहृदयस्तादृक्प

**तिः कातरे किन्नोवर्क्करकर्क्करैःप्रियशतैराक्रम्यावि क्रीयते ॥ ७ ॥**

शृ० सखीशिक्षाकर्म्माह नार्य्य इत्यादि॥ हे तन्वि क्षीणाङ्गि अन्तस्तापान्नार्य्यः प्राकृतस्त्रियो रमणं कान्तं हरन्ति नयन्ति वारिता नियन्त्रिता न निष्ठन्ति एतेन प्राकृतत्वं तासां तस्मात्कथं ताम्यसि किञ्च रोदिषि एतेन तासामभिलषितं मा कृथाः। किं कर्त्तव्यमित्याह हे कातरे वाक्प्रदानकृपणे अयं कान्तः कमनीयवेषः केलिरुचिः प्रसन्नहृदयोऽशठस्तादृक् अनुपमः पतिः किं न विक्रीयते वर्करकर्करैराक्रम्य वर्करकर्करेति लोकोक्तार्थानुकरणं। किंभूतैः प्रियशतैः प्रियानामभिलषितानां शतं यत्र वर्करस्तरुणः पशुस्तदर्थं कर्करश्चर्म्मरज्जुः प्रियशतैरिति रूपकं वा ॥

**शान्तपक्षे** ॥ इन्द्रियमुपदिशति हे क हेइन्द्रिय नोऽस्माकं आतरे तरणोपाये 'आतरस्तरपण्यं स्यात्' इति लक्षणया संसारतरणोपाये ज्ञाने कथं ताम्यसि ग्लानं भवसि किं च रोदिषि अश्रुङ्करोषि इति गौणात् तादृक्पातिरीश्वरः शास्ता कान्तः को ब्रह्मा तेषामन्तो यत्र इति अनन्तकोटिब्रह्माण्डेश्वरः कमनीयो वा केलीनां लीलानां रुचिर्य्यत्र लीलाया रुचिर्य्यस्य वा। 'जगदिदमीश्वरलीलाविलसितम्' इति श्रुतेः क्रीडतो बालस्येव चेष्टां तस्य निशामय इत्यस्ति प्रश्नः। प्रसन्नहृदयः स्वपदस्य दाता किंप्रियशतैः आक्रम्य अवस्क-

न्य विक्रीयते त्यज्यते वर्करस्तरुणः कर्करः शुक्लस्तं एति ददाति तैस्तथा अश्ववाहनाद्यभिलाषैः "श्वेताश्वःसर्वकामदः" इति अश्वशास्त्रं कथमुपेक्ष्यते स इत्याह नार्य्यः कान्तास्तद्वस्तु सत्तनुसूक्ष्मं इति हठात् कामाहंकारात् हरन्ति दूरीकुर्वन्ति वारिता निषिद्धा नो तिष्ठन्ति तत्तासां प्रियमभिलषितं मा कृथा ब्रह्मोपासनानपेक्ष्य स्त्रीवाहनादिषु सुखं न योज्यमिति संक्षेपः ॥ ७ ॥

कोपात्कोमललोलबाहुलतिकापाशेनबद्धादृढं
नीत्वाकेलिनिकेतनंदयितयासायंसखीनांपुरः॥
भूयोप्येवमितिस्खलन्मृदुगिरासंसूच्यदुश्चेष्टितं
धन्योहन्यतएव निह्नुतिपरःप्रेयान्रुदत्याहसन्॥८॥

संप्रति अधीराया मानव्यपमगमाह ॥ कोपादित्यादि ॥ 'अधीरा हन्ति सन्तर्ज्य दयितम्' इत्युदाहृतं रुद्रेण।धन्यः प्रेयान् निह्नुतिपरो दोषतिरोधानकारी रुदत्या दयितया हन्यते प्रहार्य्यते किं कृत्वा दुश्चेष्टितं अन्यस्त्रीसंभाषाचिह्नादिकं संसूच्य कथयित्वा कया भूयः पुनरपि एवं न कार्य्यमिति स्खलन् कोमलगिरा यस्तु कृतापराधो हन्यते न वद्धा हन्यते। कोपात्कोमललोलबाहुलतिकापाशेन दृढं वद्धा वाहुलतिकापाश इति रम्यं रूपकं कृपापराधः पुरुषः लोकानां संमुखे हन्यते सखीनां पुरः संमुखे केलिनिकेतनं केलिगृहं। अत्र शठो नायकः। तद्यथा "प्रियं वक्ति पुरोऽन्यत्र विप्रियं कु-

रुते भृशं। मुक्तापराधचेष्टस्तु कुटिलोऽसौ शठो यथा।" कि ञ्चिदुपादानत इति। इत्युदाहृतं रुद्रेण। सखीनामिति को- पस्य प्राचुर्य्यं तथा च "दूतो जनस्य पुरतो लघुरपि कोपो गुरुर्यतः प्रायः"॥

**शान्तपक्षे** अवधूतं वर्णयति को धन्यः श्लाघ्यः दयि- तया मायया कान्तया वा न हन्यते न पात्यते किंभूतः को- पात् कोपं अत्तीति व्युत्पत्त्या निष्कोपः। किंभूतः निह्नु- तिपरः आत्मगोपनपरः सखीनांकेलिकेतनं क्रीडागृहं उपह- सेन सायं सायः अवसादः तद्योगात् सायंकथमुपहसतीत्याह भूयः एवं न भवतीतिकोमलगिरादुश्चेष्टितंकेलिगृहाणां सं- सूच्य किंभूतः अमलल्लोलदोषैरचञ्चलः कायादिनिरस्पृष्टः योबाहुलतिकापाशस्तेन उपलक्षितः एतेनैतदुक्तं भवति अ- क्रोधः क्रोधादित्यक्तः शान्तो विष्णुमायया हन्यत एव ॥८॥

**प्रहरविरतौमध्येवाह्नस्ततोपिपरेथवा किमुतस कलेजातेवाह्निप्रियत्वमिहेष्यसि। इतिदिनशत प्राप्यन्देशंप्रियस्ययियासतो हरति गमनं बाला लापैःसबाष्पगलज्जलैः ॥ ९ ॥**

शृङ्गा० भविष्यत्प्रोषितभर्त्तृकायाबालायामौग्ध्यमाह ॥ प्रहरेति ॥ बालादिनशतप्रेष्यंअनेकदिनगम्यन्देशं यियास- तो गन्तुमिच्छतः प्रियस्य गमनं हरति कैरालापैः किंभूतैः सबाष्पगलज्जलैः साश्रुगलज्जलैः। गलज्झलैरि

तिवापाठः झलज्झलोद्रवस्तुनामेति झलज्झलेतिलोको-क्तानुकरणंवा। किम्मौग्ध्यमाह हेप्रिय प्रहरे गते सति मध्याह्ने वा ततोऽपि परं वा तृतीयप्रहरे वा किमुत सकलेऽह्नि याते वा त्वमिह वा आगीमष्यसि बहुदिनगम्यं यियासतः प्रियस्य संध्यावधिकथनान्मौग्ध्यं निशिविहरहासहत्वं वा व्यज्यते॥

**शान्तपक्षे** कश्चित् अवधूतः किञ्चिदुपदिशति इंकामंह-न्ति इहानिः कामः पुरुषः प्रियस्य मित्रस्य गमनं ज्ञानं हरतिआहति कोमलालापैः किंभूतस्य इतिर्ज्ञानं तदेवदिनश-तं दूरत्वात्तेन गम्यं देशं उपदेशं ज्ञातुमिच्छतः कोऽयमुपदेश इत्याह सकले याते ज्ञानं प्रहर मारय ज्ञानं हि द्विविधंभवति सकलंनिष्कलंच अत्रमूर्त्तिचिन्तनंसकलंज्ञानं निरञ्जनध्यानं निष्कलंज्ञानं तत्र सकलज्ञानध्वंसः तस्मिन् सतिविरतौवि-रागेसति मध्येवायज्ञवैराग्येसति ततोऽपि परेऽथवावि रागाभावेपिवा । एतेनतिसृष्ववस्थासुच निरञ्जनध्यानमौ पयिकम्भवति किंफलमित्याह अह्नः प्रियत्वंभानुत्वन्ते जोमयत्वमेष्यासि ॥ ९ ॥

यातःकिन्नमिलन्तिसुन्दरिपुनश्चिन्तात्वयाम
त्कृतेनोकार्य्यानितरांकृशासिकथयत्येवंसबा
ष्पेमयि ॥ लज्जामन्थरतारकेणनिपतद्धाराश्रु
णाचक्षुषादृष्ट्वामांहसितेनभाविमरणोत्साहस्त
यासूचितः ॥ १० ॥

शृङ्गा० याताइत्यादि ॥ हेसुन्दरि हसितेन हास्येन भाविमरणोत्साहः सूचितः भविष्यन्निधनानन्दः कथितः विरहदर्शनान्मरणादप्यानन्दः। कथमित्याह लज्जानिश्चलतारकेणधारायमाणगलदश्रुणाचक्षुषा मांदृष्ट्वा आसन्नमरणस्यापि एवं चिह्नंभवति। अपरचिह्नमाह मयि एवं कथयति सति त्व मतिशयक्षीणासि किन्तदित्याह याताः प्रस्थिताः किंपुनर्न्न मिलन्ति तस्मात्कृते मन्निमित्तं त्वया चिन्तानकार्य्या अहमप्यागमिष्यामीतिप्रस्थानवार्त्तायामपि कृशाङ्गी तथाभूता निश्चलतारकाच यथामृतेव लक्ष्यते अतः प्रस्थानश्रवणादेव क्षीणतया निश्चलत्वेन चाष्टमनवमावस्थे सूचिते। तथाचोक्तं। "तनूकृततनुर्व्याधिरष्टमाजायतेयथा। तथा दृष्टिस्तब्धगता नवमी जायते स्मृतिः"इति नवमावस्थालक्षणं॥ एतेन नायिकायाश्चोत्तमत्वंव्यज्यते। तयेति पाठः सर्व्वपूर्व्ववत्कश्चिन्नायकः सखायंसंबोधयन्नाह इति॥

**शान्तपक्षे** प्रथमतः कर्म्म संबोधयति हेमत्कृते ममक्रिये कर्म्मन्हेसुन्दरिहेशोभने त्वमतिक्षीणासिकर्म्मक्षयादेवमुक्तिः कुत्रमयिमाद्विषये किंभूते एवंकथयति किंतत् याताज्ञाताः किंमिलन्तिसंसक्ताभवन्ति एवंनिःशङ्कोनिःपरिग्रह इतिस्मृतेः तत्त्वयानोऽस्माकं श्चिन्ताकार्य्या किंभूतेमयि सबाष्पेसानन्दाश्रौ मामेवश्चक्षुषा उपलक्षितं दृष्ट्वात्वया भाविमरणोत्साहः सूचितः न कथित. नकिंचिन्ममनिधनंभविष्यतीति

यस्तुशुभाशुभकर्म्मक्षयशालीसजितमृत्युर्भवतीति ॥ १० ॥

धीरंवारिधरस्यवारिकिरतः श्रुत्वानिशीथेध्वनिं
दीर्घोच्छ्वासमुदश्रुणाविरहिणींबालांचिरंध्यायता ॥
अध्वन्येनविमुक्तकण्ठमखिलांरात्रिंतथाक्रंदितं
ग्रामीणैर्व्रजतोजनस्यवसतिर्ग्रामेनिषिद्धायथा ॥११

शृङ्गा० संप्रतिप्रोषितंवर्णयन्नाह धीरमित्यादि ॥ अध्व न्येनपथिकेन तथा समस्तांरात्रिंव्याप्य क्रंदितंयथा ग्रामीणै ग्रमे व्रजतो जनस्य पथिकस्य वसतिर्निषिद्धा क्रियते रात्रिमि ति 'कालाध्वनोः'इत्यादिना द्वितीया वाधिकरणे ध्वनिं शब्दं श्रुत्वा किंभूतं धीरं यथास्यात्तथा वारि किरतः जलंविमुञ्चतःनि शीथे अर्द्धरात्रे। किंभूतेन विरहिणीं बालां ध्यायता ध्यानादु- दश्रुणा उद्गतबाष्पेन दीर्घोच्छ्वासं यथास्यात् विरहिणां श्वास- प्राबल्यमश्रु च भवतीति ॥

**शान्तपक्षे** ईश्वरमधिक्षिपति हे इन हेईश्वर अध्वन्य ध्वनिः ख्यातिः तत्रसाधुर्ध्वन्यः नध्वन्योऽध्वन्यः त्वयावा- रिकिरतःसमुद्रस्य बालांलक्ष्मीं ध्यायता अखिलांरात्रिं सर्व- कालेनक्रंदितं उत्कण्ठितं उद्गलंयथास्यात्तथा समुद्रजलमा- दायवर्षतीति पारम्पर्य्येणजलवृष्टेः कारणंसमुद्रइति । किंभू- तांविरहिणींवियोगानित्यां चंचलांअस्थिरां कैरिवग्रामीणैरिव इवशब्दोऽत्रबोद्धव्यः इतरलोका यथालक्ष्मीं वाञ्छन्तः समयं नयन्तीति व्रजतःपरिव्राजकस्यजनस्य ध्वनिं ख्यातिं श्रुत्वा-

ज्ञात्वापि यदेवंकृतंभवता ततोज्ञातंतवाम्बायाधीर्वृद्धिरूपा सार्दीर्घामहती महामाया एकान्तोसि इति अरिश्चक्रंतंधारय-तीतिव्युत्पत्या चक्रधरस्यविष्णोः ग्रामेवसतिर्निषिद्धा त्वये-तियावत् किंभूतेऽनिशीथे निशीथोमोहनिद्राकालोपलक्षणं निर्मोहांधकार इत्यर्थः वैकुण्ठपुरवासोपिनिषिद्धोबोधितइति एतेनसंसारकामनांत्यक्त्वाभागवतंभूत्वा वैकुण्ठपुरंव्रजतीति ध्वन्यते ॥ ११ ॥

**कथमपिसखिक्रीडाकोपाद्व्रजेतिमयोदितेकठिन हृदयस्त्यक्त्वाशय्यांबलाद्गतएवसः ॥ इतिसर भसंध्वस्तप्रेम्णिव्यपेतघृणेजनेपुनरपिहतव्रीडंचे तःप्रयातिकरोमिकिं ॥ १२ ॥**

शृङ्गा० कलहान्तरितांवर्णयन्नाह कथमित्यादि ॥ हे सखि स कठिनहृदयः निष्ठुराशयः शय्यांत्यक्त्वा बलात् ह-ठात् गतएव कथमित्याह ममाक्रीडाकोपात् केलिकलहेन व्रजेतिउदितेसति कथमपि कष्टसृष्ट्या संप्रति अहंकिंकरोमि-तस्मिन्नायके व्यपेतघृणेनिर्दये इत्यनेनप्रकारेण सरभसं स कौतुकं यथास्यात्तथा ध्वस्तप्रेम्णि लुप्तप्रणये जने इतरलोक इव पुनरपि चेतः प्रयाति किंभूतं हतव्रीडं निर्लज्जं एतेना त्मनः सतीत्वं व्यनक्ति ॥

**शान्तपक्षे** हे उदिते उत्कृष्टज्ञानमयलक्ष्म्यार एकत्रास्थि-तिं केलिंवात्यक्त्वा व्रजपरिव्राजकोभव किंभूतः सखि

क्रोडाकोपात् मित्रकेलिक्रोधमत्रेति निःसंगः निःकामः निःक्रोधः किंभूतः कठिनहृदयः निस्पृहः कठिनेतिसंबोधनं वा कथंभूतस्त्वं हृदि मनसि अयःशुभावहोविधिर्य्यस्येतिसतथा अधुनासांसारिकमधिक्षिपति ॥ हे इति ज्ञाने ध्वस्ते अयनं इत् क्विप् । प्रेम्णिपुत्रदारादि स्नेहेतृष्णाबलवती पुनरपि हे अपिशब्दःसंभावनायां किंभूतं सरभसं सकौतुकं तदा किंकरोषि किमुपदिशसि किंभूतेप्रेम्णि व्यपेतघृणे उपगतजुगुप्से किंभूतेअजनेचंचले अजगतिक्षेपणयोःएतेनपुत्रदारादिस्नेहंत्यक्त्वालक्ष्मींचत्यक्त्वाअवधूतो भवेति सूचितं १२

दम्पत्योर्न्निशिजल्पतोर्गृहशुकेनाकर्णितंयद्व
स्तत्प्रातर्गुरुसान्निधौनिगदतस्तस्योपहारंवधूः॥
कर्णालंकृतिपद्मरागशकलं विन्यस्यचंचूपुटे व्री
डार्त्ताप्रकरोतिदाडिमफलव्याजेनवाग्बन्धनं॥१३॥

शृङ्गा० संप्रतिमुग्धामुपवर्णयन्नाह । दंपत्योरिति ॥ वधूर्नववधूः एकदेशलक्षणया । मुग्धानववधूस्तत्र लज्जाप्रायरतिर्य्यथा । गृहशुकस्य वाग्बंधनंवचननिरोधंप्रकरोति किंभूताव्रीडार्त्ता लज्जाकुला कर्णालंकृतिं पद्मरागशकलं श्रवणालंकारंमाणिक्यखंडं चंचूपुटेविन्यस्य दाडिमफलव्याजेन फलशब्दोऽत्रबीजवचनः तथाचधरणिः 'फलंसस्येच सीराङ्गेफलकेव्युष्टिदानयोः । किंभूतं तस्यउपहरणउपढौकनं किंभूतस्य तद्वचो गुरुसान्निधौ श्वश्र्वादिनिकटे प्रात-

निगदतः ततकिं यत्दंपत्योर्ज्जल्पतोराकर्णितंश्रुतं एतेन नाटिकायाश्चातुर्यं शुकस्य पटुत्वं व्यज्यते ॥

शान्तपक्षे ईश्वरमाधिक्षिपति हे इन हे ईश्वर निर्व्रीड-निर्लज्ज हे आर्त्त मायापीडित हे अप्रकर अपकृष्टकारक हे उतिद उतिउद्व्याख्यानं उद्यतिखण्डति उतिदः हे आलिम। आलिः सखी तासु मा लक्ष्मीर्य्यस्य कामुकत्वात् हे फलव्याज फलेज्ञाननिष्पत्तौ व्याजः कपटंयस्यसतथा पद्मरागसकलं सख्य मनुरागखंडं स्त्रीपुत्रविषयाविन्यस्य दूरीकुरु विन्यस्य इतिलोट् हि किंभूतं गुरु महत् तत् किं दंपत्योर्ज्जल्पतोर्निशि यद्वचआकर्णितं तन्निगदनचिन्तया शुको यथाउपहारंभक्ष्यं-त्यजति तद्वत् त्वमपि रागान् त्यजेति ॥ १३ ॥

**अज्ञानेनपराङ्मुखींपरिभवादाश्लिष्यमांदुःखितां**
**किंलब्धंचटुलत्वयेहनयता सौभाग्यमेतांदशां ॥**
**पश्यैतद्दयितारतिव्यतिकरोन्मृष्टाङ्गरागारुणं वक्ष**
**स्तेमलतैलपङ्कशवलैर्वेणीपदैरङ्कितं ॥ १४ ॥**

शृङ्गा० संप्रतिखंडितां वर्णयन्नाह ॥ अज्ञानेति ॥ हे चटुलचंचल त्वयाकिंलब्धं मांदुःखितां परिभवादपमानात् पराङ्मुखीमाश्लिष्य अज्ञानेनअवैदग्ध्येन विदग्धोहिमानिनीं संमुखीकृत्य आश्लिष्यति त्वयापराङ्मुखाश्लिष्टेति किंभूतेन-त्वया सौभाग्यंसुभगत्वं एतांदशांनयता कथंचटुलइत्याह इदंवक्षःपश्य किंभूतं दयिताकुचव्यतिकरोन्मृष्टं रागारुणं

प्रियाणांकुचव्यासिश्रेण निक्षिप्तानुलेपनशोणं एवंभूतंवक्षः वेणीपदैरंकितंचिह्नितं पश्य किंभूतैरमलतैलपंकशबलैः मलयोगात् मलंपंकंयत्तेनाचित्रैः एतेनाविदग्धेतिसूचितं आत्मनश्चवैदग्ध्यंव्यज्यते अभिनवदोषारसवत्वंसूचितं मानस्यनवत्वंकथितं अपरवनितासङ्गालग्नंविलेपनमितिरुद्रः। 'साधीरावक्तिवक्रोक्त्ये'तिवचनान्नायिकायाश्च धीरात्वंसूचितम्॥

शान्तपक्षे ईश्वरं पुनरधिक्षिपति हे इन हे ईश्वर अज्ञानज्ञानशून्य हे चटुल मांलक्ष्मीं आलिंग्य किंत्वयालब्धं कुत्सालब्धेति किंशब्दः कुत्सायांकथमित्याह दुःखितांदुःखसंपृक्तां जनयन्ति जने दुःखं पातयन्ति विपत्तिषु मोहयन्ति 'संपृक्तौकथमर्थाः शुभावहा':इतिवचनात् लक्ष्मींदुःखदैव किंभूतां परिभवात् यत्किंचित्परिभवं प्राप्य पराङ्मुखीं विघटितां परिभवादिति 'ल्यब्लोपे' इति पंचमी किं कर्त्तव्यमिति उपदिशति हे दयिताकुचव्यतिकरोन्मृष्टांग हे प्रियाकुचालिंगनयुक्तशरीर निःकाम इति यावत्। वशः किंभूतं वेणीपदैःगंगायमुनादीनांसंगमो वेणीतिख्यातिः 'वेणी निकटबंधे स्यान्नदीनां मेलकेऽपिच'। तस्याः पदैर्व्यवसायैश्चिह्नितं अमलतानिर्मलता ऐलंजलविकारः फलादिः इलाजलं तस्य विकारऐलं अथवाऐलं पङ्कःपार्थिवकर्दमः इलापृथ्वी तत्रभवः ऐलः तेनशबलैश्चित्रितं एतेनसंसारिकंसुखंत्यक्त्वाप्रयागवासीभवेतिध्वन्यते॥ १४ ॥

**एकत्रासनसंस्थितिःपरिहृताप्रत्युद्गमाद्दूरतस्ता**
**म्बूलानयनच्छलेनरभसा श्लेषोपिसंविघ्नितः ॥**
**आलापोपिनविश्रुतः परिजनं व्यापारयन्त्या**
**न्तिके कान्तंप्रत्युपचारतश्चतुरया कोपःकृतार्थी**
**कृतः ॥ १८ ॥**

शृङ्गा० मानविशेषं वर्णयन्नाह ॥ एकत्रेति चतुरया कोपः कृतार्थीकृतः सफलीकृतः कथमित्याह कान्तंप्रति उपचारतो व्यवहारतः कोऽसावित्याह एकत्रासनसंस्थितिः सहावस्थानं दूरतः प्रत्युद्गमनादेवोत्थानेन परिहृता रभसाश्लेषोपि कौतुकालिंगनमपि संविघ्नितं वारितं ताम्बूलानयनछलेनपूगपर्णचूर्णादिपुटकं तस्यानयनच्छलेनच्छद्मना अन्तिके निकटे आलापोपि न विश्रुतः विशिष्टं न श्रुतः किंभूतयापरिजनंसखीजनं व्यापारयन्त्या कर्म्मसुनियोजयन्त्या एतेननायिका प्रशस्तधीराइति कथितं तथाच "कृतदोषेपिसाधीरा तस्मिन्नाद्रियतेरुषा।" यद्वाचः प्रचुरोपरा इत्याद्युदाहरणमपि ॥

**शान्तपक्षे** ईश्वरोपकरणमधिक्षिपति हे आसन सिंहासन मयाएकत्रसंस्थितिः संस्थानं परिहृतं विदूरतः प्रत्युद्गमनात् किंवा दूरं प्रत्युद्गमाविशिष्टज्ञानात् ब्रह्मज्ञानादित्यर्थः हेताम्बूलपूगपुटक छलेनकपटेन आनय हे रभसकौतुकतरश्लेषोपि न संविघ्नितः त्यक्तः हेपरिजनंप्रति-

व्यापारप्रेषणोन्मुख अत्रालापोऽपि नविश्रुतः एतान्युक्त्वा-किंकरोषि इत्याह चतुरयामोक्षधियाकान्तंइन्द्रियान्तं यान्त्या अहमन्तिके संप्रति कृतार्थीकृतः किंभूतोऽहं अकोपः निः-क्रोधः एतेनैन्द्रियसुखंत्यक्त्वा अवधूतः कृतार्थो भव-तीति ॥ १५ ॥

**दृष्ट्वैकासनसंस्थितेप्रियतमे पश्चादुपेत्यादरादेक**
**स्यानयने पिधायविहितक्रीडानुबन्धच्छलः ॥**
**ईषद्वक्रिमकन्धरः सपुलकः प्रेमोल्लसन्मानसा**
**मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरांचुम्बति**
**॥ १६ ॥**

शृङ्गा० नायिकांवर्णयित्वा तस्याएवज्ज्येष्ठादिभेदेनेतर-वैदग्ध्यंवर्णयति तथाचोक्तं "एकाज्येष्ठा कनिष्ठान्यानायकं प्रणयंप्रति"। उदाहृतंच 'प्रदक्षिणे कुवलयकान्तिनीलि' इति तदनुसारेणाह दृष्ट्वेति ॥ धूर्त्तश्चतुरः अपराज्येष्ठा न विद्यते परा यस्या इति प्रेयसीं चुम्बति किं कृत्वा एकासनसंस्थिते प्रियतमे दृष्ट्वा पश्चाद्गत्वा आदरात् सम्भ्रमेण एकस्या नेत्रे आच्छाद्य कृतकेनानुबन्धेच्छया ईषद्वक्रिमकन्धरः सन् किं-भूतामन्तर्हासलसत्कपोलफलकां द्वयोरुभयोरनुरंजनत्वाद्वैद ग्ध्यं तथाच कविकण्ठहारः। "बह्वीनांप्रेयसीनांयः कुरुतेच्चि-त्तरञ्जनं। सविदग्ध इति ख्यातः कलासु कुशलोपि सः" इति स्वभाववर्णना जात्यलंकारोऽयं नायकस्य ॥

शान्तपक्षे धूर्त्तः संसारेणापरित्यक्तः अपरां शक्तिं चुम्बति। संयोजयति चुबिवक्त्रसंयोगे धातुः लक्षणयासंयोगार्थः॥ न विद्यते परा यस्याः सा तथा अःविष्णुस्तत्परां श्रेष्ठां आद्यामिति यावत् । अइव परां अपरां इति वा॥ "अभीतगोचरां वाचां मनसां च विशेषणां। ज्ञानिज्ञानपरिच्छिन्नां वन्दे चेश्वरतां पराम्" इति विष्णुपुराणे। किंभूतः विहितक्रीडानुबन्धच्छलः विशब्दोविरोधार्थः विरोधवत्केलिप्रकारः ईषद्वक्रिमकन्धरः आसनविशेषेण भवति। तदुक्तं योगशास्त्रे। 'हृदये न्यस्तचिकुरः पादौ चान्योन्यसंहतौ। नासासंचारिनयनो भवेद्योगीजितेन्द्रियः' इति सपुलकः प्राणायामविशेषे रोमाञ्चः संभवति प्रेमोल्लसन्मानसां प्रेम्णा उल्लसन्मानसं यत्र तथा अन्तर्हासेन अन्तर्विकाशेन उल्लसत् कपोलफलकं यस्या जातान्तःप्रकाशा हि प्रसन्नवदना अवधूता भवन्ति किंकृत्वा एकस्या मायाया नयनेआलोचने जगतोमायामयत्वात् मायाया एकत्वं एकासनसंस्थिते एकाधारगते द्वे शक्ती प्रायस्तावद्दृष्ट्वा 'अजामेका' मिति श्रुतिः एतेन योऽवधूतो भवति स सांसारिकीं मायां त्यक्त्वा परां शक्तिमेव ध्यायतीति मुक्तिसोपानम् ॥ १६ ॥

चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखोनिभृत
कितवाचारेत्युक्त्वारुषापरुषीकृते ॥ व्रजातिर
मणेनिःश्वस्योच्चैःस्तनास्थितहस्तयानयनसलि

**ल्व्याजाद्दृष्टिःसखीषुनिवेशिता ॥ १७ ॥**

शृङ्गा० कलहान्तरितां चतुरां वर्णयन्नाह ॥ **चरणेति**॥ स्तनस्थितहस्तया दृष्टिः सखीषु निवेशिता अर्पिता उच्चैर्निःश्वस्य दीर्घश्वासं त्यक्त्वा कस्मिन् सति रमणे व्रजति इति रुषा उक्त्वा परुषीकृते किं तत् हे निभृतकितवाचार हे विरसशठ प्रसादपराङ्मुखे अदृष्टप्रसादे चरणपतनप्रत्याख्यानात् 'उपेक्षायां चाटुकारमपी' त्यादिकलहान्तरितालक्षणं। स्तनस्थितहस्तया इत्यनेन सूक्ष्मालंकारकथनं इङ्गिताकारलक्ष्यार्थः सौक्ष्म्यात्सूक्ष्मइति । नयनसलिलव्याजेत्यनेन तथाश्रुभिर्दृष्टिर्विरुद्धा तथा भवतोभिरयं विरुध्यतामिति कथयति दीर्घनिःश्वासेनातीव विरहो व्यज्यते ॥

**शान्तपक्षे** सकाममधिक्षिपति हे स्तनस्थितहस्त रमणे क्रीडायां या दृष्टिः साश्रुः सखीषु निवेशिता व्रजति निभृतकितवाचारे कपटव्यवहारे न पत कामसंयुक्तो न भव हे चरण जंगम अवधूता हि जंगमा भवन्ति । किंभूते प्रत्याख्यानात् प्रसादपराङ्मुखे खण्डनादप्रसादे कामव्यवहारो हि खंडितो भवति तत्केन रुषा क्रोधेन कर्कशीकृते इत्युक्त्वा एतेन कामित्वं त्यक्त्वा परिव्राजको भवेत्यर्थः ॥१७॥

**काञ्च्यागाढतरावरुद्धवसनप्रान्ताकिमर्थपुनर्मुग्धाक्षीस्वपितीतितत्परिजनंस्वैरंप्रियेपृच्छति ॥ मातः सुप्तमपीहवारयतिमामित्याहितक्रोधयापर्य्यस्यस्व**

**पितिच्छलेनशयनेदत्तोऽवकाशस्तया ॥ १८ ॥**

**शृङ्गा०** संप्रति मानिन्याः प्रसादेनोपेक्षाकर्तृत्वं वर्णयति । तथा 'साम दानं च भेदश्च स्यादुपेक्षा नतिस्तथा' इत्यादि प्रसादेनोपेक्षायाः । "प्रसादेन विधिं त्यक्त्वा वाक्यैरन्यार्थसूचकैः । यत्र प्रसादयेद्योषिऽदुपेक्षा सा मता तथा" इति तदनुसारेणाह । **कांच्येति** ॥ तया आहितक्रोधया पूर्वं विहितमानया पर्य्यस्य स्वप्नच्छलेन शयने शय्यायां अवकाशो दत्तः । कस्मिन् सति प्रिये तत्परिजनं तस्याः सखीजनं एवंपृच्छति किं तत् इयं लोलाक्षी चंचलनयना । मुग्धाक्षीति पाठः सुगमः।किमर्थं स्वपिति।किंभूतेयंकांच्या मेखलया दृढतरबंधवस्त्रप्रान्ता । एतेन मानो व्यज्यते । लोलाक्षीत्यनेन कपटनिद्रा व्यज्यते किं कृत्वा अवकाशो दत्तः सुप्तमपि वारयतीति कृत्वेत्यत्रकाशः । प्रसादच्छलेन नायिकाया अधैर्य्यत्वं व्यज्यते सुखसाध्यत्वादपि उत्तमेति सूचितम् ॥

**शान्तपक्षे** ॥ अवकाशः प्रकाशः प्रबोधइति यावत् तया मायया दत्तः तत्परिजनं ब्रह्मोपासकं पृच्छति 'तत् सदि' तिश्रुतेः तत्शब्देन ब्रह्मोक्तं । किं तदित्याह काञ्चीनाम नगरी तया आगाढतया सम्यक्सेविता अवबद्धवसनस्य प्रान्ता च कृतनिवासैकदेशा च मुक्तिक्षेत्रत्वात् तस्याः तथा च 'अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैता मुक्तिदायिकाः । ' तथा च किमर्थं

न किंचिदुद्दिश्य लोलाक्षी माया स्वपिति निद्राति कुत्र प्रिये वस्तुनि या मातः लक्ष्मीहेतोः सुप्तमपि वारयति हे इत्यज्ञानेनाहितक्रोध निःक्रोध मां लक्ष्मीं पर्य्यस्य परिक्षिप्य छलेन कपटेन सुप्त। एतेन एतदुक्तं भवति सुमुक्तिक्षेत्रवासी निष्कामः निर्भोगः निष्पटश्च भवतीति ॥ १८ ॥

**एकस्मिन्शयनेपराङ्मुखतयावीतोत्तरंताम्यतो**
**रन्योन्यस्यहृदिस्थितेप्यनुनयेसंरक्षतोगौरवं ।**
**दम्पत्योःशनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-**
**र्भग्नोमानकलिःसहासरभसंव्यासक्तकण्ठग्रहः॥ १९**

शृङ्गा० नायिकाया मानभंगं वर्णयित्वा द्वयोर्मानभङ्गं वर्णयन्नाह ॥ एकस्मिन्नित्यादि ॥ दम्पत्योर्जायापत्योर्मानकलिर्मानकलहः भग्नः कथमित्याह शनकैर्मन्दं अपांगयोर्वलनात् मिश्रणात् मिश्रीभवच्चक्षुषोरेकीभवन्नयनयोः चक्षुःशब्दोऽत्र दृष्टिवचनः लक्षणया। अत एव सहासरभसव्यासक्तकण्ठग्रहत्वं। एकस्मिन् शयने शय्यायां पराङ्मुखतया वीतोत्तरं विगतोत्तरं यथा स्यातथा ताम्यतोः स्थितयोः। कथमित्याह। अन्योन्यस्य हृदि स्थितेप्यऽनुनये प्रेम्णि स्थितेपि गौरवं संरक्षतोः एतेन द्वयोरप्युत्तमत्वं व्यज्यते ॥

**शान्तपक्षे** ॥ मुक्तये उपदिशति। हे तया मायया वीत त्यक्त एकस्मिन् शयने पराङ्मुख एकत्रावस्थितमपि दम्पत्योर्गौरवं न्यस्य दूरीकुरु किंभूतयोः उत्तरं उत्तरकालं ता-

म्यतोः किंभूतस्त्वं अन्यः संसारादन्यः ॥ अन्यद्विशेषणं समानम् । तदा कलिः कलियुगव्यवहारो मानभङ्गः भग्न एव । एतेनैव एतदुक्तं भवति । योऽवधूतो भवति । स निर्म्मायो भवति । एकत्रानवस्थितः निष्कामश्च भवतीति संभोगपूर्वामवस्थां मा पश्येति ॥ १९ ॥

**पश्यामोमयिकिंप्रपद्यतइतिस्थैर्य्यंमयालम्बितं किंमामालपतीत्ययंखलुशठःकोपस्तयाप्याश्रितः ॥ इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे सव्याजंहसितंमयाधृतिहरो बाष्पस्तु मुक्तस्तया ॥ २० ॥**

शृङ्गा० कश्चिन्नायको नर्म्मसचिवमाख्याति । मया सव्याजं सच्छलं हसितं किं कृत्वा वयं पश्यामः मयि मद्विषये नायिकया किं प्रपद्यते क्रियते कपटशालिनि मयि तयापि कोप आश्रितः अयं शठो धूर्त्तो मामालपति वदतीति कृत्वा शनैरगाढानुरागभरेण दृष्टिबलात् मानभङ्ग उत्तमत्वं व्यज्यते ॥

**शान्तपक्षे** ॥ सांसारिकमधिक्षिपति । इत्यन्य ज्ञानबहिष्कृत इति ज्ञानं तस्मादन्यः । शठः कपटी मां लक्ष्मीं आलपति संभावयति सेवते इति यावत् मायायाः लक्ष्म्याः किं स्थैर्य्यं नालम्बितं एवं न किं कृत्वा मयि मद्विषये असौ प्राप्यते तत् पश्याम इति कृत्वा । कथं लक्ष्मीसेवनमयुक्तमि-

त्याह । अवस्थान्तरे प्रसङ्गान्तरे सव्याजं सच्छलं मुक्तस्त्य
क्तः पुरुषो धृतिहरो भवतीति अबाष्पः अनश्रुः सम्भावनात्
तस्मिन् पुरुषे तु मया लक्ष्म्या हसितं । किंभूते अन्योन्यवि-
लक्षदृष्टिचतुरे परत्वं निरीक्ष्य दर्शनकुशले यदा लक्ष्मीक
आसीत्तदा अन्यैः कार्य्यप्राप्तदर्शनआसीदेतेन योऽवधूतो
भवति स लक्ष्मीं चंचलां प्रति निस्पृहो भवति ॥ २० ॥

परिम्लानेमाने मुखशशिनितस्याःकरधृते मयि
क्षीणोपाये प्रणिपतनमात्रैकशरणे ॥ तयापक्ष्म
प्रान्तव्रजपुटनिरुद्धेनसहसाप्रसादोबाष्पेणस्तन
तटविशीर्णेनकथितः ॥ २१ ॥

शृङ्गा० मानमार्ज्जनोपाये रतिं वर्णयन्नाह ॥ परिम्लान
इत्यादि ॥ तया प्रसादः कथितः केन बाष्पेणाश्रुणा पक्ष्मप्रा
न्तव्रजपुटनिरुद्धेन पक्ष्म नेत्रलोम तेषां प्रान्तव्रजेन अग्रस
मूहेन यः पुटस्तेन रुद्धेन एतेन घनपक्ष्मत्वात् पद्मिनीत्वं
व्यज्यते । स्तनतटविशीर्णेन इत्यनेनानुरागो व्यज्यते । त-
थाच कविकण्ठाभरणं। "दोर्मूलोत्तोलनञ्चैव स्तनयोः स्पर्शनं
छलात् ।" इति । अनुराग इङ्गितलक्षणः कथं प्रसादोभूत्
इत्याह माने परिम्लाने सति कथमित्याह मयि प्रणिपतन-
मात्रैकशरणे प्रणाममात्रैकशरणे सति केवलं दैन्यमालंब्य
पादपातानियते अतः क्षीणोपाये उपायान्तररहिते । "प्रणि-
पातः प्रतीकारः संरम्भो हि महात्मनां" इति नायिकाया

महत्त्वं व्यज्यते । मानचिह्नमाह । तस्या मुखशशिनि मुखचन्द्रे करधृते सति हस्तन्यस्तकपोले सतीति मानलक्षण नायिका च मध्यमा ॥ तथाह रुद्रः 'प्रयाति कारणाद्रागं मध्यमा सा मता यथा' ॥

शान्तपक्षे शृंगारभावमधिक्षिपति ॥ तस्या नायिकायाः करधृते काले मन्त्रध्वनौ धृतिर्य्यस्याः सा तथा मयि मद्विषये प्रणिपाते मयि किंभूते प्रणिपतनमात्रैकशरणे न निषेधस्त न्मात्रप्राये 'यत् किञ्चिज्जल्पने तु देवनं भवतीति' श्रुतेः । माने अहंकारे परिम्लाने मुखं उपायं संसारतरणस्येति शंसितुं शीलं यस्य शश प्लुतगतौ । कथमित्याह तया मायया प्रसादः कथितः कथं ज्ञायत इत्याह बाष्पेण । जात प्रसादा हि आनन्दाश्रुशालिनो भवंतीति ॥ २१ ॥

**तस्याःसान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितंकिं**
**वक्षश्चरणानतिव्यतिकरव्याजेनगोपाय्यते ॥ इ**
**त्युक्तेक्वतदित्युदीर्य्यसहसातत्संप्रमार्ष्टुंमयासा**
**श्लिष्टारभसेनतत्सुखवशात्तन्व्यापितद्विस्मृतं ॥२२**

शृङ्गा० निःशङ्कनायकंवर्णायन्नाह ॥ तस्या इति ॥ सा मया आश्लिष्टा किमर्थं तत् संप्रमार्ष्टुं क्व तदित्युक्त्वा किमित्याह वक्षः किंगोपाय्यते संव्रियते किंभूतं तस्याः अन्यनायिकायाः सांद्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं घनमनुलेपनं यत्र एवम्भूतो यस्तनतटस्तस्य या प्रश्लेषणमुद्रा

आलिङ्गनपरिपाकः तेनाङ्कितं चिह्नितं अनुलेपनस्य अनल्पत्वेन तस्या अवैदग्धं व्यज्यते चरणप्रणिपातच्छलेन आलिङ्गनसुखवशात् तन्व्यापि नायिकयापि तन्मानादिचिह्नं विस्मृतं 'निःशङ्कः कृतदोषोपि' इत्यादिरुद्रवचनान्निःशङ्कत्वं नायकस्य ॥

शान्तपक्षे ईश्वरमधिक्षिपति । हेइन हे ईश्वर चरणानतिकरव्याज पादप्रतिपन्नेषु व्याजःकपटं यस्य स तथा वक्षो हृदयं किं गोपाय्यते संव्रियते तस्या मायाया सान्द्रविलेपनं निबिडानुभवः सएव स्तनतटस्तस्य प्रश्लेषमुद्रा तया अङ्कितं क्व तदित्यज्ञानप्रबले किंकृत्वा क्वतद्ब्रह्म कुत्रेत्युक्त्वा किमर्थं मया लक्ष्म्या तत् प्रमार्ष्टुम्प्रोज्झितुं किंभूतया तन्व्या अल्पया ततसुखवशाद्ब्रह्म विस्मृतं एतेनैतदुक्तं भवति 'तवमायानुभावेन मुग्धेन ब्रह्ममानयेति' ॥ २२ ॥

**त्वं मुग्धाक्षिविनैवकञ्चुलिकयाधत्सेमनोहारिणींलक्ष्मीमित्यभिधायिनिप्रियतमेतद्वीटिकांसंस्पृशि । शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितोनिर्य्यातःशनकैरलीकवचनोपन्यासमालीजनः ॥ २३ ॥**

शृङ्गा० उपेक्षानाममानिन्याः प्रसादं वर्णयन्नाह ॥ त्वंमुग्धाक्षीति ॥ आलीजनः सखीजनः निर्यातः शनकैर्मन्दम्मन्दं अलीकवचनोपन्यासं यथा स्यात्कपटवचनो-

पन्यासं यथास्यात् एतेन सखीनां चातुर्य्यं। किंभूतः शय्योपान्तनिविष्टा या सस्मितमुखी अर्थान्मुख्या नायिका तस्या नेत्रोत्सवेनानन्दितो नयनप्रसादेन हर्षितः। कस्मिन्सति प्रियतमे इत्यभिधायिनि सति कथयति सति किंतत् हेमुग्धाक्षि सुन्दरनयने कञ्चुलिकया विना किं मनोहारिणीं शोभां नधत्से अपितु धत्स एव किंभूते तद्वीटिकां संस्पृशि कंचुलिकाबन्धनप्रबन्धो वीटिका तत्संस्पृशि बन्धनमोचनकामे सतीतियावत्। 'प्रसाधनविधिं त्यक्त्वा वाक्यैरन्यार्थसूचकैः। यत्र प्रसाद्यते योषिदुपेक्षा सा मता यथा' इतिवचनादुपेक्षेयं॥

शान्तपक्षे मानसमधिक्षिपति॥ हे मनः त्वं लक्ष्मीं धत्से. अभिलषसि किंभूतां हारिणीं हरणं हारः तद्योगाद्धारिणी लक्ष्म्याश्चञ्चलत्वात् अतएव मुग्धाक्षि मूढदर्शनं अक्षिशब्देन लक्षणया अक्षमिन्द्रियं तद्योगात् वीटिकाशब्दोऽत्रबन्धनवचने लक्षणया प्रकरणात् संसारबन्धनमोचने मित्रजनसामान्योपि निर्यातःपरिव्राजको बभूव किंभूतःअलीकवचनोपन्यासमाली कपटवचनबन्धमनोयुक्तः अवधूतोहि बहिः कपटप्रबन्धेनात्मानं संवृणुते किंभूतो नेत्रोत्सवान न्दितः नयनाक्षिप्तेन गुरुणा उत्साहेननान्दितः आनन्दमयीकृतः सस्मितमुखी सहासवदनयुक्तः शय्योपान्तनिविष्टइति मनोविशेषणं निद्रामायायुक्तेतियावत्। एतेनैतदुक्तं भवति मनसो लक्ष्मीलिप्सां दूरीकृत्य सद्गुरूपदेशेनानन्दोभूत्वा अवधूतेनभवितव्यम् २३

भ्रूभङ्गेरचितेपिदृष्टिरधिकंसोत्कण्ठमुद्वीक्षतेका
र्कश्यंगमितेपिचेतसितनूरोमाञ्चमालम्बते ॥ रु
द्धायामपिवाचिसस्मितमिदंदग्धाननंजायतेदृष्टे
निर्वहणंभविष्यतिकथंमानस्यतस्मिञ्जने॥२४॥

शृङ्गा० अनुरागविशेषमाह ॥ भ्रूभङ्ग इति सख्या मा
नार्थ शिक्षिता काचिदनुरागभावमाह हेसखि तस्मिन् जने दृ-
ष्टे सति कथंमानस्य निर्वहणं निर्वाहो भविष्यतीति । कथमि-
त्याह भ्रूभंगे भ्रुकुट्यादौरचितेपि दृष्टिःसोत्कण्ठं यथास्यात्तथा
अधिकमीक्षते । वाचिरुद्धायामपि इदं दग्धाननं सस्मितंजाय-
ते । दग्धमिति धिक्कारोक्तौ चेतसि मनसि कर्कशतांगमिते-
प्रापितेपि स्वतःकर्कशं नभवति किंतु कर्कशतांगतमेव तनूरो-
माञ्चमालम्बते । एतेनान्तरानुरागः प्रकाशितोभवतीति ॥

शान्तपक्षे अहंकारिणमधिक्षिपति । तस्मिन् ब्रह्मणि दृष्टे
साक्षात्कृतेसति अहंकारस्य कथं निर्वाहोभविष्यति । यतः
"कामादयो विनश्यन्ति तस्मिन्दृष्टे परात्परे" । हेदग्ध सा-
दृष्टिः भ्रूभंगे भ्रुवोरेवभंगिस्तस्या अधिकं वीक्षते । 'भ्रुवोर-
न्तर्गता दृष्टिर्भवत्यत्यन्तयोगिनामिति' । किंभूता दृष्टिः
अचिते अन्वये । घटपटादिवस्तुज्ञानेच मानाभिभवे उत्क-
ण्ठामहती मुत् यस्याः सा तथा पुनः किमिह वाचि रुद्धायां
मौने प्रारब्धे आननं जीवनं सस्मितं सहर्षं जायते जीव-
नोत्साहो भवतीति । चेतसि कार्कश्यं गमिते स्त्रीपुत्रादिसं-

मोहं त्यक्तवति तनुः सपुलका भवतीति आनन्दतो रोमाञ्चः स्यादेतेनैतदुक्तंभवतीति । मोहान्मनोनिबिडीकृत्य वाचं संयम्य भ्रुवोरन्तर्गतां दृष्टिं कृत्वा अहंकारं त्यक्त्वा ब्रह्म सेव्यमित्युपायः ॥ २४ ॥

कान्तेकत्यपिवासराणिगमयत्वंमीलयित्वादृशौ
स्वस्तिस्वस्तिनिमीलयामिनयनेयावन्नशून्या
दिशः । आयातावयमागमिष्यतिसुहृद्वर्गस्य
भाग्योदयैः सन्देशोवदकस्तवाभिलषितस्तीर्थे
षुतोयांजलिः ॥ २५ ॥

शृङ्गा० भविष्यत्प्रोषितभर्तृकायाआच्छन्नमाह ॥ कान्तेति ॥ कश्चिन्नायको वदति हेकान्ते त्वं दृशौ मीलयित्वा कतिचित्वासराणि गमय चक्षुर्न्निमेष इव कतिचिद्दिनानि नय। नायिकावदति स्वस्तिस्वस्तीत्यंगीकारे नयने निमीलयामि तावत् यावत् शून्या दिशो नभवन्तीति भवन्तो यावन्नगच्छतिं किंवा दिशो मण्डलाकारदर्शनतया यावत् शून्या न भवन्ति तावदेव चक्षुर्निमीलयामि । अन्यथामनस्तापभावादिकष्टं मण्डलाकारमितिकामशास्त्रं । कान्तः पुनराह आयाता वयं। कान्ताह सुहृद्वर्गस्य मित्रसमूहस्य भाग्योदयैरागमिष्यति। नममेतिभावः । कान्तः पुनराह तवाभिलषितो वांछितः कः सन्देशः । कान्ताह तीर्थेषु तोयांजलिः । एतेनाहं प्राणांस्त्यक्ष्यामीत्याक्षेपेण गमनं निरुध्यते इत्याक्षेपालंकारः ॥

शान्तपक्षे मित्रजनमुपक्षिपति । हेसुहृत् हेमित्र कान्तेकमनीये स्त्रीपुत्रादौ वस्तुनि त्वं दृशौ मीलयित्वा तन्नष्टः कतिचिद्वासराणि गमय तव नयने अहंनिमीलयामि मुद्रयामि यावत् दिशः उत्कृष्टनायिकाः शून्या नभवन्ति विशिष्टास्त्रीशून्या इति ज्ञानं यावन्नोत्पद्यते 'दिशोऽलंकारिताः स्त्रियः' इतिधरणिः। स्वस्तिस्वस्तीति प्रारम्भे ततःकिंफलमित्याह। आयातौ सत्यां यस्यज्ञाने सति अयंशुभावहं किं या आगमिष्यति लिप्सते वर्गस्यकुलस्य उदयैः भाक् भाजतेः कर्त्तरिक्विप् 'एकोज्ञानीवंशमेव तारयती'तिश्रुतेः। तीर्थेषु तोयांजलिर्वंशस्तारणीय इतिचेत्तत्राह। आभिरायातिभिस्तत्वज्ञानवासितश्चबन्धः कस्तीर्थेषु तोयाञ्जलिःसन् प्रादेशः अपितु सर्वएवबन्धः 'सस्नातःसर्वतीर्थेषु यःपरंब्रह्मविन्दती'तिश्रुतेः एतेनैतदुक्तं भवति। संसारवासनादार्ढ्यं निरस्य तत्वज्ञानं जायते तस्मिंश्च सति वंशोद्धारणं सर्वतीर्थपर्य्यटनफलञ्च जायते इति ॥ २५ ॥

सापत्युःप्रथमापराधसमयेसख्योपदेशंविनानो
जानातिसविभ्रमाङ्गवलनावक्रोक्तिसंसूचनं॥ स्व
च्छैरच्छकपोलमूलगलितैःपर्य्यस्तनेत्रोत्पलाबा
लाकेवलमेवरोदितिलुठल्लोलालकैरश्रुभिः ॥ २६ ॥

शृङ्गा० संप्रतिबालायामानंवर्णयन्नाह ॥ सेति ॥ सा बाला सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनं न जानाति कस्मि-

न् समये पत्युःप्रथमापराधसमये सख्योपदेशं विना इति किंकुरुते केवलमेवरोदिति कैरश्रुभिः किंभूतैः स्वच्छैः निर्म्मलैः निर्म्मलकपोलमूलगलितैः कोपकृतवदनवक्रत्वादिरहितत्वात्कपोलमूलाद्गलितैः मुखवक्रादिकमंगभंगविकारो-बालयाकर्त्तुमशक्यः । कथंभूतापर्य्यस्तनेत्रोत्पला परिक्षिप्तनयनपक्ष्म एतेनाश्रुबाहुल्यमुक्तं । लुठल्लोलालकैः लुठन्तो गलिता लोलाश्चंचला अलका येषु तैः तथा तदुक्तं । 'अन्या निषधमानेपि यदि सा कुप्यति प्रिये । रोदित्यस्याग्रतः स्वल्पमनुनीता च तुष्यती ' ति ॥

**शान्तपक्षे** मैत्रीमाक्षिपति । अयेसख्योपदे सख्यं उपदा उपढोकनमितिरूपकं । 'उपदातूपढोकनमि'तिकोषः। हेपत्युः प्रथमा सात्वं विभ्रम दूरंगच्छ। कथमित्याह सजनः अंगवलनावक्रोक्तिसंसूचनं नो जानाति शं विना कल्याणंविना किं भूतं अपराधसंदोषान्तकरं अपराधं स्यतीति व्युत्पत्त्या नात्मनो जानातीत्यतः कथं तं लोभयतीतिभावः । कल्याणं मोक्षपदार्थः । संप्रति कामशरणमाक्षिपति हेइबल कामबल कुचचन्दनादे आइतिसम्बोधने आवराक वराकोऽधमः तस्येदंवाराकं हेनेत्राश्रुणापर्य्यस्तपरिक्षिप्त हे अवर अधम विषये त्वं उत्पल उद्गच्छ । पलसंख्याने । मे मम किंभूतस्य अश्रुभिरुपलक्षितस्य किंभूतस्य उदितिरुत्कृष्टज्ञानं तेन लोला अलका यत्र तस्य स्वच्छकपोलमूलगलितैः शरीरनैर्मा-

ल्यात् । एतेनैतदुक्तं भवति निःसङ्गो निष्फलः निष्काम-
श्चसन्व्रजेति ॥ २६ ॥

भवतुविदितंभव्यालापैरलंखलुगम्यतांतनुरपि-
नतेदोषोस्माकंविधिस्तुपराङ्मुखः । तवयदि
तथाभूतंप्रेमप्रपन्नामिमांदशांप्रकृतितरलेकानः
पीडागतेहतजीविते ॥ २७ ॥

शृङ्गा० संप्रति मध्यमानं वर्णयन्नाह ॥ भवत्विति ॥
हेप्रिय त्वयागम्यतां हे भव्य कार्य्यकुशल इति विदितंख्यातं
भवतु।आलापैरलं व्यर्थं तवेत्युचितपदं सानुनयत्वात् । तनु-
रपि अल्पोपि न तव दोषः । अस्माकं विधिर्दैवं । पराङ्मुखः
तस्मिन् पराङ्मुखे सति निधनं जायते । तत्किमर्थमित्याह ।
तव तथाभूतं अनिर्वचनीयं प्रेम यदिइमां दशां प्रपन्नं तदा-
स्माकं हतजीविते गते कापीडा अपितु न कापीत्यर्थः ॥

शान्तपक्षे बान्धवमुपदिशति । हेप्रिय गम्यतां परिव्रा-
जको भव भव्यालापैरलं सांसारिकालापैरलं मौनंकुरु वाग्य-
तो भव भवाय कल्प्यते भव्यं कथमेवं कर्तव्यमित्याह वित्
विज्ञानं इतंज्ञातं भवतु तववचनंकथंकर्त्तव्यमित्याह।अस्माकं
नते नम्रे पुरुषे दोषो विधिः दोषजनकत्वात् दोषोपि तनुरपि-
अल्पोपि पराङ्मुखः किंपुनर्महान् यदि तव प्रेम सांसारिक-
स्नेह इमां दशां परिव्राजकतां प्रतिपन्नं हेप्रकृतिचपल हेइ-
हत कामहत जीविते इकानःपीडागता इकोविवेकः सए-

व अनः शकटं तस्य पीडा गता । एतेनैतदुक्तं भवति वाग्यतेपरिव्राजके कामपीडा नास्ति इति उच्यते ॥ २७ ॥

**उरसि निहितस्तारोहारः कृताजघने घने कलक लवती काञ्ची पादौ क्वणन्मणिनूपुरौ । प्रियम भिसरसि मुग्धे त्वं समाहताडिण्डिमायदि किम धिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥ २८ ॥**

शृङ्गा० वेश्यामभिसारिकां वर्णयन्नाह ॥ उरसीति ॥ हेमुग्धे त्वं आहतडिण्डिमासती शब्दायितडिण्डिमासती प्रियमभिसरसियदि किं दिशःप्रेक्षसे समधिकत्रासोत्कम्पं यथास्यात्कथमाहतडिण्डिमा प्रगल्भा इत्याह उरसि तरोहारः चाकचिक्यादियुक्तो हारस्त्वया दत्तः जघने कलकलवती शब्दायमाना कांची कृता पादौ रणन्मणिनूपुरौ कृतौ 'सशब्दाभरणं कामं वेश्या सरति नायकं । सखीयुक्ता यदाधिक्यात् स्फारिताक्षीत्वशङ्किता, इति विशिष्टानायिका ॥

शान्तपक्षे सांसारिकमधिक्षिपति । हेमुग्ध हेमूढ यदि इत्वं कामत्वं अभिसरसि किंभूतं प्रियं अनेनैव त्वदुरसि हारोदत्तः किंभूतः स्तारः । स्तृञ्आच्छादने स्तृणातीतिस्तारः । जघने अकलकलवतीशब्दहीना काञ्चीकृता पादौ रणन्मणिनूपुरौ कृतौ इत्यर्थः । कथंज्ञातमित्याह दिशः प्रशस्तकान्ताः समुत्सहर्षःसन् ईक्षसे किंभूता आहतडिण्डिमाः प्रगल्भाः हेऽधिकत्रास हेमहासंसारभय त्वंकिंभूतं उत्कम्पं

उत्कृष्टः कम्पोयस्मात् एतेनैतदुक्तं भवति विरुद्धभूषणोयथा-
उपहास्यते जनः तथाउपहसनीयोभविष्यतीत्यर्थः ॥ २८ ॥

**प्रातःप्रातरुपागतेनजनितानिर्निद्रताचक्षुषोर्म
न्दायांमयिगौरवव्यपगमादुत्पादितंलाघवं । किं
मुग्धेनमयाकृतंरमणधीर्मुक्तात्वयागम्यतांदुःस्थंति
ष्ठसियच्चपथ्यमधुनाकर्त्तास्मितच्छ्रोष्यसि॥२९॥**

**शृङ्गा॰** खण्डितांवर्णयन्नाह ॥ **प्रातरिति** ॥ काचिद्व-
दति त्वया प्रातःप्रातरुपागतेन चक्षुषोर्निर्निद्रताजनिता
प्रतिरात्रौअन्यत्रास्थित्वाप्रातरेवागम्यते अतएव मन्दायांम-
यि लाघवमुत्पादितं कस्मात् गौरवव्यपगमाद्धेतोः । कान्तः
प्राह किं मूढेन मया कृतं। कान्ताऽऽह रमणाधीः प्रियबुद्धि-
र्मुक्ता अतस्त्वया गम्यतां । कान्तः प्राह दुःखं यथास्यात्तथा
तिष्ठसि । कान्ताऽऽह अधुना यत्पथ्यं कर्त्तव्यं करिष्यामि
तत्श्रोष्यसि जीवं त्यक्ष्यामीति भावः ॥

**शान्तपक्षे** राजानमधिक्षिपति । हे इन हे ईश्वर हेमुग्ध
मूढ हेरमणक्रीडासक्त मया लक्ष्म्या किंकृतं नकिमपीत्यर्थः ।
र्धीर्ज्ञानं त्यक्तं त्वया गम्यतां परिव्राजकोभव अत्रदुःस्थंस्था-
स्यासि यत्पथ्यंकर्त्तास्मि उपदेक्ष्यामि तत्श्रोतव्यमित्याह ।
मयिइनजनितागौर्वाणीमन्दा ईश्वरजनितं वचनं मन्दमि-
त्यर्थः। चक्षुषोर्लाघवं सूक्ष्मदर्शनमुत्पादितं किंभूतं व्यपगमात्
व्यपगमोमृत्युः तमत्तीतिव्यपगमात् मरणहरं यानिर्निद्रता

उपागता तांअवरक्ष आं इतिसम्बोधने। प्रातःप्रातः प्रत्यहं पालय एतेनैतदुक्तंभवति ऐश्वर्य्यंपरित्यज्यनिर्निंद्रोभूत्वा परिव्राजको भवइत्यर्थ. ॥ २९ ॥

**साबालावयमप्रगल्भमनसःसास्त्रीवयंकातराःसा पीनोन्नतिमत्पयोधरयुगंधत्तेसखेदावयं। साक्रा न्ताजघनस्थलेनगुरुणागन्तुंनशक्तावयंदोषैरन्य जनाश्रितैरपटवोजाताःस्मइत्यद्भुतम् ॥ ३० ॥**

शृङ्गा॰नृविरहंवर्णयन्नाह ॥ **साबालेति** । कश्चिदाह साबाला अप्रगल्भा वयंअप्रगल्भमनसः कामक्रान्तत्वात् ॥ अतोविरोधः। एवंसर्वत्र। सास्त्रीवयंकातराःकृपणाः। सा- नायिका पीनोन्नतिविशिष्टस्तनयुगंधत्ते वयंसखेदाः खेदा- न्विताः। सागुरुणाजघनस्थलेनआक्रान्तापीडिता वयंगन्तुं नशक्ताः वयंअन्यजनाश्रितैःदोषैःकारणकैः अपटवोऽदक्षा याताःस्म इतिकिं अद्भुतं अतिशयाविरहत्वात् ॥

**शान्तपक्षे** इतरमधिक्षिपति हेअन्यजन वयमपटवो- जाताःस्म पटवोजाताइत्यर्थः किंभूताः गुरुणाइत्यद्भुतंज्ञा- नेषु भूतं ज्ञातुं गन्तुंशक्ताः समर्थीकृता। अन्तर्भावितोण्यर्थः। गुरुणाकिंभूतेन साक्रान्ताजघनस्थलेन एन विष्णुनास- हवर्त्ततेसाः साक्षासौक्रान्तजघनस्थलश्चेतितेनतथा क्रान्त अजस्यब्रह्मणोघनस्थलंनिबिडस्थलंयेनतथा किंभूतावयं अ- श्रितैरसेवितैर्दोषैरुपलक्षिता अदोषाइत्यर्थः। किंभूतावयं

साएनसहवर्त्तन्तेसाइत्यद्भुतं किम्भूतं बालावयं वाविकल्पस्तस्यलावश्छदनंतद्यातीति निर्विकल्पकंज्ञानमित्यर्थः। किम्भूतावयं ए विष्णौ प्रगल्भंमनोयेषांते अप्रगल्भमनसः किम्भूतंज्ञानं सास्त्रीवयंस्त्रियंवातिगच्छतीतिस्त्रीवः कामुकः नस्त्रीवोअस्त्रीवस्तस्ययाः गमनन्तेनसहवर्त्तते अकामुकज्ञानसहितं। वयंकिम्भूताः कातराःकमिन्द्रियंआतरन्तिकातरा जितेन्द्रियाः। कथंगुरूपदेशोधारणीयइत्याह। सगुरुःअधरयुगंओष्ठाधरंधत्ते किम्भूतं उन्नतिमत्पयोमहत्वयुक्तमृतं पुनः किम्भूतं खेदावयं खेदान्त्रिकालदुःखानि अवयति निन्दति खेदावयं आपीनलक्ष्म्यावृद्धइतिजनविशेषणं एतेनैतदुक्तंभवति वयंसद्गुरुकृपयामुक्तियोग्याभूताज्ञानंप्राप्य यूयं नभूताइत्यर्थः॥ ३०॥

> प्रस्थानंवलयैःकृतंप्रियसखैरस्रैरजस्रंगतंधृत्यान
> क्षणमासितंव्यवसितंचित्तेनगन्तुंपुरः॥ यातुंनि
> श्चितचेतसिप्रियतमेसर्वेसमंप्रास्थिता गन्तव्येस
> तिजीवितप्रियसुहृत्सार्थःकिमुत्यज्यते॥ ३१॥

शृङ्गा० प्रोषितभर्तृकं वर्णयन्नाह॥ प्रस्थानमित्यादि॥ हेजीवितप्रिय सुहृत्सार्थोऽतिबान्धवसंहतिः किमुत्यज्ज्यते कस्मिन्सतिगन्तव्येसतियदिगन्तव्यमरिततदागम्यतां। कोऽयंप्रियसुहृत्सार्थइत्याह। वलयैः प्रस्थानंकृतं अस्रैरश्रुभिः अजस्रंसर्वदागतं प्रियसखैरित्युचितं पदं

अनवरतगलनत्वात्बाहुल्यंमश्रुणः धृत्याधैर्य्येण क्षणंनास्थि-
तं चित्तेनपुरोगन्तुंव्यवसितं एतेनसर्वैवलयादयः प्रियतमे ग-
न्तुं निश्चितचेतसिसति समंसह प्रस्थिताः त्वयाकथंनगम्यत-
इत्याशयः एतेनकार्श्यक्रन्दनास्थैर्य्योद्वेजिताःसूचिताः ॥

शान्तपक्षे मित्रमुपदिशति। हेमित्र हेसुत्हृत् जीवितप्रि-
य प्राणप्रिय गन्तव्ये सति परिव्राजकेसति सार्थःसंघस्त्य-
ज्यते किंप्रश्ने उसम्बोधने एकाकीव्रजेदिति। कथंसंघस्त्याज्य
इत्याह। सर्वेअसमंअसङ्गंतंख्यातं प्रस्थिताःगताः कस्मिन्
सतिएवविष्णौनिश्चितचेतसिसति किमर्थंप्रस्थितं यातुंज्ञातुं प्रि-
येतिपुनःसम्बोधनमनुकम्पायाम्। ज्ञानक्रममाह लयैःसाध्य
विकल्पज्ञाने मनसोनिवृत्तिरेवेति। प्रस्थानंगमनंकृतं वइवा-
र्थे लयैःकथंज्ञानं कृतमित्याह सखैरस्रैः सेन्द्रियैरश्रुभिः
सततंगतंच्युतं लयेहिजाते आनन्दाश्रुक्षरतीति तदेवोत्प्रेक्षते
बाह्येन्द्रियकज्ञानमपि तेनसहक्षरतइत्यर्थः। ततः किंभवती-
त्याह धृत्यासांसारिकप्रीत्या क्षणमपि नस्थितं अतएव चित्ते-
न पूर्वमेवगन्तुंव्यवसितं। एतेनैतदुक्तंभवति। लयंबद्ध्वाऐ-
न्द्रियकंज्ञानंविहाय संसारवासनांत्यक्त्वा विष्णौमनोनिवेश्य
निःसङ्गःप्रव्रजेदित्यर्थः ॥ ३१ ॥

सन्दष्टाधरपल्लवासचकितंहस्ताग्रमाधुन्वती
मामामुञ्चशठेतिकोपवचनैरानर्त्तितभ्रूलता ॥
शीत्काराञ्चितलोचनासरभसंयैश्चुम्बितामानिनी

प्राप्तंतैरमृतंमुधैवमथितोमूढैःसुरैःसागरः ॥ ३२ ॥

शृङ्गा० शठनायकंवर्णयन्नाह ॥ सन्दष्टेति ॥ सरभसंसकौतुकंयथास्यात्तथायैर्मानिनीचुम्बिता तैःस्मृतंलब्धं मूढैर्मुखैः सुरैर्देवैः सागरोयत्मथितः तन्मुधैवतद्व्यर्थमेव। मुधाशब्दोऽव्ययंव्यर्थार्थकं । किम्भूता मानिनी संदष्टाधरपल्लवा सम्यक्प्रकारेणदंशितकृतो अधरपल्लवोयस्याः सा अतएव सचकितं सकोपं यथास्यात्तथा हस्ताग्रमाधुन्वती ईषदुत्क्षेपयन्ती इतिकोपवचनैरानर्तितभ्रूलता अलीकभ्रुकुटियुक्ता । किंतद्वचनं मामामुञ्चशठेति हेशठ मांआमुञ्च । शीत्कारेणाञ्चितंकुटिलीकृतं लोचनं यस्याःसातथा । वदनेशीत्कारातिशयेननयनोपान्तंकुञ्चितंभवतीति तस्या अनुकूलदक्षिणशठधृष्टा इति चत्वारो नायकाः ॥

शान्तपक्षे लक्ष्मीमधिक्षिपति यैः पुरुषैर्मा लक्ष्मीर्माचुम्बिता नस्पृष्टा तैरमृतं मोक्षः प्राप्तं। किम्भूतालक्ष्मीर्मूढैः संदष्टाधरपल्लवा मूढजनोपभुक्ता अतएवाह शठ मुञ्च इतिकोपवचनैरिव हस्ताग्रमाधुन्वती परोपभुक्तास्मीति निषेधं कुर्वन्त्याहेत्यर्थोगम्यमानः। किम्भूता मानिनी अहंकारयुक्ता लक्ष्मी साहङ्कारा भवतीति । शेषं समानं। एतेन लक्ष्मी मोहं त्यक्त्वा मोक्षः प्राप्यते इत्यर्थः ॥ ३२ ॥

सुप्तोयंसखिसुप्यतामितिगताःसख्यस्ततोनन्तरं प्रेमावासितयामयासरलयान्यस्तंमुखंतन्मुखे ॥

**ज्ञातेलीकनिमीलनेनयनयोर्धूर्त्तस्यरोमाञ्चतो लज्जासीन्ममतेनसाप्यपहृतातत्कालयोग्यैः क्रमैः ॥ ३३ ॥**

शृङ्गा० ॥ धूर्त्तनायकंवर्णयन्नाह ॥ **सुप्तोऽयमिति** ॥ काचिद्बालावदति हेसखि मम या लज्जा आसीत् सापि तेन धूर्त्तेनापहृता खण्डिता तत्कालयोग्यैः सुरतादिभिः । कथं लज्जासीदित्याह । धूर्त्तस्य रोमाञ्चतः पुलकतः अलीकनि-मीलने कपटनिमीलने कपटशयने ज्ञाते सति कथं रोमाञ्च इत्याह । मया सरलया ऋजुबुद्ध्या तन्मुखे मुखं न्यस्तं प्रेमावासितया प्रेमयुक्तया कथमेवं कृतमित्याह । हेसखि अयं सुप्तः त्वया सुप्यताम् इति कृत्वा गताः सख्यः तदन-न्तरं तन्मुखे मुखं न्यस्तम् इति ॥ ‘अलीकनिद्रां गत्वा वा प्रबोधवचनात् क्वचित् । बालाचेष्टान्तु यो वित्ति स धूर्त्त इति गम्यते ॥’

**शान्तपक्षे** हेममते हेममत्व ममशब्दोऽव्ययोऽपि धूर्त्त स्य या लज्जासीत् सा तत्कालयोग्यैः क्रमैः तद्ब्रह्म तस्य काल-स्तत्कालः तत्रयोग्यैः क्रमैः प्राणायामप्रत्याहारादिभिर्न अप-हृता अपितु अपहृतैव । शिरश्चालनेनञ् । कथंलज्जेत्याह । तया ख्यातया मया लक्ष्म्या प्रेमा सौहार्दं अवासि किंभूतया-सरलया रं धनं लाति रलस्तद्युक्तया तन्मुखे तस्या उपाये सम्पदर्जने मुखं न्यस्तं किम्भूतः अयं प्रेमा । सुप्तः मुद्रितः

तदनन्तरं सख्यादीति सम्बन्धः । कस्मिन्सम्बन्धे सति लज्जा इत्याह । नयनयोरलीकेन कपटेन निमीलने नेत्रमुद्रायां सत्यां । एतेनैतदुक्तं भवति । निर्म्ममः प्रत्याहारादिशाली अवधूतो भवतीति ॥ ३३ ॥

**कोपोयत्रभ्रुकुटिरचनानिग्रहोयत्रमौनं यत्रान्यो**
**न्यस्मितमनुनयोयत्रदृष्टिःप्रसादः । तस्यप्रेम्ण**
**स्तदिदमधुनावैषमंपश्यजातंत्वंपादान्तेलुठसि**
**नहिमेमन्युमोक्षःखलायाः ॥ ३४ ॥**

शृङ्गा० मानमाह ॥ **कोपइति** ॥ यत्रप्रेम्णि कोपो भ्रुकुटिरचना मौनंनिग्रहः अन्योन्यास्मितं हास्यमनुनयः दृष्टिर्दर्शनं प्रसादः तस्य प्रेम्णः संप्रतिवैषमं वैषम्यं जातं त्वंपश्य। किन्तदित्याह । त्वं पादान्ते लुठसि मम खलाया मन्युमोक्षः क्रोधत्यागो न भवतीति । एतेनापराधबाहुल्यं सूचितम् ॥

**शान्तपक्षे** माया भगवन्तमाचष्टे । पादाः प्रत्यन्तपर्वताः तेषामन्ते निकटे त्वं लुठसि तथा मम खलायामन्युमोक्षोनभवतीति त्वां न जानामीत्यर्थः । किंवा त्वं पादान्ते लुठसि मम खलायामोक्षस्त्यागोन अपितुभूतएव । अमन्युयथास्यात् अन्यः क्रुद्धःसन्त्यजति अक्रोधोपित्वंत्यक्तवानसि इतिअतएव तस्यप्रेम्णः वैषम्यं पश्य । यत्रकोपइत्यादिसुगमं । भगवान् पूर्वमनिष्ठुरहृदय आसीत् अधुनापि निस्पृहोऽभवदिति ॥३४॥

**सुतनुजाहिहिकोपंपश्यपादानतंमांनखलुतव**

**कदाचित्कोपएवंविधोभूत् ॥ इतिनिगदति नाथेतिर्य्यगामीलिताक्ष्यानयनजलमनल्पंमुक्त मुक्तंनाकिञ्चित् ॥ ३५ ॥**

शृङ्गा० बालाया मानमाह ॥ सुतन्विति ॥ कश्चिदाह हेसुतनु त्वंकोपं जहिहि त्यज पादानतं मां पश्य कस्मिन्नपि- काले तव एवंविधः एवंप्रकारःकोपोमाभूत् इति नाथे निग- दति सति तिर्य्यगामीलिताक्ष्या अनल्पंनयनजलंमुक्तंत्यक्त किञ्चिन्नोक्तं । एतेन केवलरोदनेन बालात्वमुक्तम् ॥

शान्तपक्षे हेसुतनु माये मां जहिहि त्यज पादानतं पर्व- तैकदेशाश्रितं वानप्रस्थमितियावत् । मांपश्य कोपंक्रोधशा- लिनं खलुप्रश्ने । तवअपःनपातीत्यपोऽरक्षक इतियावत् । कदाकस्मिन् कालेचित्कोऽभूत्चिदिति चिद्विषयेकायति- चित्कः ज्ञानशाली नकदाचित् तत्त्वज्ञानशाली तवप्रियो- बभूवेति नाथेप्रियेअवधूते इतिज्ञानविषये निगदतिसति त- या मुक्तं प्रतिकिञ्चिन्नोक्तं किम्भूतं नयनजलं नयने दर्शन- कर्मणि जडंबहिर्दर्शनमूढं अनल्पंमहान्तं किम्भूतया तिर्य क्आसम्यक्मीलिताक्ष्यामुद्रितनयनयेत्यर्थः । एतेनैतदुक्तं- भवति । योवानप्रस्थोभवति सलक्ष्म्या मुच्यते इति ॥ ३५॥

**गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा सान्द्रस्नेहरसातिरेकविगलत्श्रीमान्नितम्बाम्बरा ॥ मामामानदमातिमामलमितिक्षामाक्षरोल्लापिनी**

**सुप्ताकिन्नुमृतानुकिंमनसिमेलीनाविलीनानुकिम्॥**

शृङ्गा० प्रगल्भायाः सुरतमाह ॥ **गाढेति** ॥ गाढालि-ङ्गनेनवामनीकृतौ खर्वीकृतौ यौ कुचौ ततःप्रोद्भिन्नउद्गतोरो माञ्चोयस्याः सातथा। कुचयोर्वामनीकृतत्वेनातिशयालिङ्ग-नत्वमुक्तं । सान्द्रस्नेहरसातिरेकेणविगलत्श्रीमन्नितम्बाम्ब रं यस्याः सा तथा । अत्यन्तभावोदयेवस्त्रभ्रंशोभवति । इति क्षामाक्षरोल्लापिनी इति मन्दाक्षरंजल्पंती । किंतदि त्याह । हेमानदमानंददातीति मानदः तस्यसंबोधने अलं अत्यर्थं मां अतिमा मा मा पीडय इतिन्यूनपदत्वेन गुणः किम्भूता सुप्ता निश्चला मनसीति यावत् । मृता निश्चला इष्टत्वात् किं मम मनसि लीना मनस्येवान्तर्भूता नु किं मम मनसि विलीना द्रवीभूता वा इति ॥

**शान्तपक्षे** गुरुमाह । हेमानद मानंअहंकारं द्यति ख-ण्डयतीति मानदः अहंकारशमक मामानिषेधे मालक्ष्मीः सर्वमिदं सांसारिकं न च भवति । सम्पदितिज्ञाने सति मांअलं अत्यर्थं माति मानयति श्रयतीति यावत् इतं गतं तत्-क्षामाक्षरोल्लापिनी क्षामं कल्याणं तेषु यदक्षरं अचञ्चलं तत्त्वज्ञानं तदुल्लपितुंशीलं यस्याः सा तथा मे मनसि व्रीडात-द्गत् प्रेक्षते सुप्तानुकिं विलीनाकिंनु । एतेनातिशयनीयत्वंसू-चितं । गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमेऽसान्द्रः अनिबिडो यो रसातिरेकस्तेन विगलन्ती यान्ती श्रीस्तद्युक्त

इति मानदविशेषणं किम्भूतावाम्बरावाविकल्पः सएवाम्बरं शून्यंयत्रनिर्विकल्पेत्यर्थः। एतेनैतदुक्तं भवति। हेगुरो तवप्र सादात् उत्पन्नतत्त्वज्ञानोऽहंजातइति ॥ ३६ ॥

**पटालग्नेपत्यौनमयतिमुखंजातविनयाहठाश्ले षंवाञ्छत्यपहरतिगात्राणिनिभृतं। नशक्नोत्या ख्यातुंस्मितमुखसखीदत्तनयनाह्रियाताम्यत्यंतः प्रथमपरिहासेनववधूः ॥ ३७ ॥**

**भ्रूभङ्ग**० बालांवर्णयन्नाह ॥ **पटालग्नेति** ॥ नववधूर-स्यनायकस्य प्रथमपरिहासे ह्रिया लज्जया अन्तस्ताम्यति-ग्लायति कथमित्याह किञ्चिदाख्यातुं नशक्नोति कथंस्मित-मुख्यः याः सख्यः तासु दत्तनयना अतएवलज्जातिशयत्वं किंकरोतीत्याह पत्यौ मुखं नमयति सति जातविनया। इवा-र्थोगम्यमानः पत्यौ हठाश्लेषंवाञ्छतिसति नायिकागात्राणि निभृतं अपहरति सम्बन्धादपनयति। सकम्पाचुम्बनेवक्त्रं इत्याद्युदाहृतं रुद्रेण ॥

**शान्तपक्षे** राजानं सम्बोधयति हेइन् हेईश्वर अलग्ने-पत्यौ असंलग्नेईश्वरे पटगच्छयःसर्वभूतोनचसर्वभूतइत्यस्ति किंमुखमुपायं नमयति माययेत्यर्थः हेजातविनयेति सम्बन्धः आहठाश्लेषंवाञ्छति सस्वयंनभजते यदिचिन्त्यते तदैवल-भ्यते गात्राण्यपहरति अशरीरंमोक्षं दातरि यद्यपि सर्वेषामन्त-र्वसति तथाप्यन्तःकरणकर्म्मख्यातुं कथयितुं न शक्नोति

आह्लिया सम्यक्लज्जया वाताम्यति केव प्रथमपरिहासावधूरि-
व इवार्थे व शब्दःस्मितमुखसखीदत्तनयनइश्वरविशेषणंएते-
नैतदुक्तं भवति सर्वभिदं परित्यज्य जगदीश्वरं चिन्तयेति ३७

गते प्रेमाबन्धेप्रणयबहुमाने विगलिते निवृत्ते स
द्भावेजनइवजनेगच्छतिपुरः । तदुत्प्रेक्ष्योत्प्रे
क्ष्यप्रियसखिगतांस्तांश्चादिवसान्नजानेकोहेतु
र्दलतिशतधायन्नहृदयम् ॥ ३८ ॥

शृङ्गा॰ प्रोषितभर्तृकामाह ॥ गतेप्रेमेति ॥ काचिदाह
हेप्रियसखि गतान् दिवसानुत्प्रेक्ष्यविभाव्य अहंतन्नजाने
हृदयंयत्शतधानदलति तत्रकोहेतुःकिंकारणं कस्मिन्सति
गृहीतनाम्नि तस्मिन्जने नायके गच्छतिसतिजनइवसामा-
न्यलोकइव प्रेमाबन्धे स्नेहस्य सम्यग्बन्धे गते सतिप्रणय-
बहुमाने प्रेम्णोबहुत्वे विगलितेसति सद्भावे सौहार्दे निवृत्ते-
सति एतेनहृदयस्य कार्कश्यं प्रथयति ॥

शान्तपक्षे बान्धवमाह हेतद्ब्रह्म उत्प्रेक्ष्यदृष्ट्वा जने अयं
शुभावहविधिं गछति सति अजनइव वैष्णवइवयद्धेतो मनो
नदलति तन्नजाने कथंव्रजतीत्याहप्रेमाबन्धे स्त्रीपुत्रादिमो-
हबन्धेगतेसति कथमेतत्स्यादित्यतआह प्रणयबहुमाने वि-
ष्णुविषयस्नेहस्य बहुमाने विगलितेअदृष्टेसति सद्भावेसद्ब्र-
ह्मतत्रभावः अन्तःकरणसौहार्द्रेतस्मिन् अप्रवृत्तेसति कथं-
हृदयंदलतीत्याह सखिगतान् मित्राश्रितान् दिवसान् उत्प्रे-

क्ष्य मम सख्युरेवंदिवसा गताः मम कथं नु यान्तीतिभावः॥३८

**चिरविरहिणोरुत्कण्ठार्त्तिश्लथीकृतगात्रयोर्नव मिवजगज्जातंभूयश्चिरादभिनन्दतोः ॥ कथम पिदिनेदीर्घेयातेनिशामधिरूढयोःप्रसरतिक थाबह्वीयूनोर्यथानतथाऽरतिः ॥ ३९ ॥**

शृङ्गा० विप्रलम्भान्तेआलापमाह ॥ चिरविरहिणो-रिति ॥ यूनोः स्त्रीपुंसयोर्यथा कथा बह्वी बहुतरा प्रसरति प्रकाशते तथा न रतिः किम्भूतयोश्चिरविरहिणोःउत्कण्ठया-याआर्त्तिःपीडातयाश्लथीकृतगात्रयोः जगन्नवमिव नूतनमि-वजातं चिरकालानन्तरं भूयः पुनरपिचिरादभिनन्दतोः शीलयतोः दिनेदीर्घे कथमपिकष्टसृष्ट्यायातेसति निशांरात्रि-मारूढयोःस्थितयोः। 'अनुभूतः प्रकाशः स्यादालापः प्रथमं-तयोरि' तिरसप्रदीपः ॥

**शान्तपक्षे** अवधूतयोःसङ्गतिमाह दीर्घेज्ञाने धारावाहि-कज्ञानेकथमपिनन्दतोः जगदभि भयशून्यंजातं नविद्यते भी र्यत्रतत् किम्भूते ज्ञाने दिनइवदिनेप्रकाशकत्वात् किम्भू-तयोश्चिरविराहिणोः चिरंत्यक्तसंसारयोः ठं शून्यं तद्विषये याआर्त्तिर्वासनाविशेषः तेनश्लथीकृतगात्रयोः अनिष्ठुरशरी-रयोः जगत् किंभूतंउत्कं उत् उत्कृष्टानि कानि सुखानि यत्र अतएवनवमिव प्रत्यग्रमिव। किंभूतयोः निशायामधिरूढयोः निशान्तेतयोः कथाख्यातिः प्रसरति यथा यूनोर्नरतिः।एतेनै

तदुक्तंभवति सम्यक्ज्ञानशाली नित्यसुखो निर्भयः ख्यातिमाँश्चभवति ॥ ३९ ॥

दीर्घावन्दनमालिकाविरचितादृष्टयैवनेन्दीवरैः
पुष्पाणांप्रकरःस्मितेनरचितोनोकुन्दजात्यादि
भिः ॥ दत्तःस्वेदमुचापयोधरयुगेनार्घ्योनकु
म्भाम्भसास्वैरेवावयवैःप्रियस्याविशतस्तन्व्या
कृतंमङ्गलं ॥ ४० ॥

शृङ्गा० आगते प्रिये प्रियायाःचेष्टामाह ॥ दीर्घाबन्देनेति ॥ तन्व्यास्वै रेवावयवैर्निजैरङ्गैर्मङ्गलं कृतं कस्य विशतः प्रियस्य मन्दिरमित्यर्थः किन्तदित्याह दीर्घावन्दनमालिका दृष्टयाविरचितानेन्दीवरैः न नीलोत्पलैः एतेन दृष्टेर्दीर्घत्वं सूचितं अवयवत्वंच स्मितेन हास्येन पुष्पाणां प्रकरो विक्षेपो रचितः कुन्दजातीप्रभृतिभिर्न । एतेनहास्यस्य विशदत्वमुक्तं । पयोधरयुगेन स्तनद्वयेन घर्मजलंत्यजता अर्घ्योदत्तः नघटजलेन एतेनस्वेदस्यप्राचूर्य्यमुक्तं । 'चेष्टाचद्विविधा प्रोक्ता आङ्गिकी बाह्यकी तथा, तत्राङ्गिकी चेष्टेयं ॥

**शान्तपक्षे** मित्रमाह हे प्रिय तन्व्या कान्तया कृतंमङ्गलंस्य अन्तं कुरु-षोन्तकर्मणिलोट् ।हि भसा दीप्त्या स्वैरेव विशतः पुरुषस्य मङ्गलं यवैर्वेगैःअवरक्ष कथमित्याह हेदीर्घा वन्दन दीर्घअवन्दनं विष्णुवन्दनं यस्य स तथा हेमालिका विरचित मालक्ष्मीः सैवालिका कुत्सितासखी तयाआविर-

च्चितआघटित । नापुरुषः अदृष्टयाविष्णुध्यानादिनापश्यति सएवना अन्यथानभवतीत्यर्थः तत्रदृष्टान्तमाह स्मिते हास्ये विषये पुष्पाणां प्रकरः कुन्दजात्यादिभी रचितः इन्दीवरैर्न रचितः अयमर्थः कुन्दादिभिरेवहास्यसाम्यं ननीलोत्पलैः विष्णुभक्तएवनाअन्योन नित्यंसुखंकथमित्याह अधरयुगेना-र्घ्यः कलियुगेन अर्घोदत्तः कुम्पृथ्वीं भांदृष्टिं च योनआप नप्राप यतोनकेवलं स्वेदप्राप्यश्रमजनकत्वात् । एतेनैतदुक्तंभवति स्त्रीकृतविलासादिकंत्यक्त्वाविष्णुध्यानशीलोभवेति।४०

कान्तेसागसिशायितेप्रियसखीवेशंविधायागते
भ्रान्त्यालिङ्ग्यमयारहस्यमुदितंतत्संगमाकांक्ष
या ॥ मुग्धेदुष्करमेतदित्यतितरामुक्त्वासहासं
बलादालिङ्ग्यच्छलितास्मितेनकितवेनाद्यप्र
दोषागमे ॥ ४१ ॥

शृङ्गा० शठनायकं वर्णयन्नाह ॥ कान्तेति अद्य प्रदो-षागमे रजनीमुखे आयाते धूर्त्तेन अहं छलितास्मि किंकृत्वा सहासं यथास्यात्तथा बलादालिङ्ग्य किमुक्त्वा हेमुग्धे एतत् अतितरं दुष्करं इत्युक्त्वा कथमेतदित्याह मयातत्संगमाकां-क्षया किञ्चिद्रहस्यं गोपनवचनं उदितं कथितं सखीभ्रान्त्या आलिङ्ग्य कथमित्याह कान्ते सागसि सापराधे सति सखीवेशं विधायागतेसति किम्भूते शायिते 'स्वार्थेणिच्' अतएव भ्रान्तिरिति "अपराधस्य शान्त्यर्थं कृतरूपान्तर-

ग्रहः। नायिकामुपगच्छेद्यः स ज्ञेयः शठनायक" इति ४१

आशङ्क्यप्रणतिंपटान्तपिहितौपादौकरोत्यादरा
त्व्याजेनागतमावृणोतिहसितंनस्पष्टमुद्वीक्षते।
मय्यालापवतिप्रतीपवचनंसख्यासहाभाषतेत
स्यास्तिष्ठतुनिर्भरप्रणयितामानोपिरम्योदयः ४२

शृङ्गा० धीराया मानं वर्णयन्नाह ॥ आशंक्येति ॥ तस्यास्तन्व्या निर्भरप्रणयिता तिष्ठतु अतिशयप्रणयोस्तु मानोदयोपि रम्यः। कथमित्याह। आशंक्य प्रणतिं तर्कयित्वा पटान्तपिहितौ वस्त्रान्तेनाच्छादितौ पादौ करोति आगतं हास्यं व्याजेन कपटेन आवृणोति स्पष्टं नोद्वीक्षते मयि आलापवति सति प्रतीपवचनं विरुद्धवचनं यथा स्यात्तथा सख्या सहाभाषते ॥

शान्तपक्षे अवधूतं पश्यन् कश्चिदाह आःकष्टे तस्यरम्योदयः मधुरतत्वज्ञानं तिष्ठतु किंभूतः अमानः अतीतमानः कथमेतदाह प्रणाममाशंक्य पादौ कौपीनछन्नौ करोति किंभूतःआदरात् सम्यक्भयात् व्याजे कपटे आगतं आगमनं न करोति हसितं आवृणोति व्यक्तं न प्रेक्षते मयि आलापवति विरुद्धमाभाषते किंभूतः सख्यासहा सखीनामासःक्षेपणं तद्धन्तीति। एतेनैतदुक्तं भवति ज्ञानी भवेति ॥ ४२ ॥

सायावन्तिपदान्यलीकवचनैरालीजनैःशिक्षिता
तावन्त्येवकृतागसोद्रुततरंव्याहृत्यपत्युःपुरः ॥

**प्रारब्धापुरतोयथामनसिजस्याज्ञातथावर्त्तितुंप्रे**
**म्णोमौग्ध्यविभूषणस्यसहजःकोप्येषकान्तःक्रमः४३**

श्रृङ्गा० कृत्रिममानं वर्णयन्नाह ॥ साथावन्तीति ॥ सा नायिका आलीजनैः सखीजनैः यावन्ति पदानि सुप्तिङ-न्तानीत्युपलक्षणानि शिक्षिता किंभूतैरलीकवचनैः कपट-वचनैः तावन्त्येव पदानि कृतागसः पत्युःपुरः अग्रे द्रुततरं यथास्यात्तथा व्यात्हृत्यउक्त्वा तथा वर्त्तितुंचेष्टितुं पुरतोऽग्रे प्रारब्धा यथामनसिजस्याज्ञा कथनमिति अर्थान्तरन्यास-माह मौग्ध्यविभूषणस्य प्रेम्णः सहजः कोप्येषकान्तः कमनीयः क्रमः ' मानोहि द्विविधः प्रोक्तः सहजः कृत्रिम-स्तथा । स्वयं कृतस्तु सहजः कृत्रिमोऽन्यानियोजित ' इतिर सप्रदीपः ॥

**शान्तपक्षे** कामिनं प्राह यथा मनसिजस्याज्ञा तथा-वर्त्तितुं प्रारब्धा। कर्मकर्तृविवक्षायां कर्त्तरिक्तः। मौग्ध्यविभू-षणस्य मौग्ध्यं मुग्धता सा एव विभूषणं यस्य चातुर्य्यभू-षणस्येति यावत् । एवंभूतस्य प्रेम्णः कोपि क्रमः कान्तः सहजः स्वभावकमनीयः उपक्रमः । कथमित्याह आली माया यावन्ति पदानि कपटोक्तिभिः जनैः शठैः शिक्षिता अभ्यस्ता तावन्त्येव पदानि पत्युरीश्वरस्य विभोः पुरः सम्मुखं कृत्वा प्रारब्धा अर्थाज्जना आप्लुत्याप्लुवन्ति । एते-नै तदुक्तं भवति अकिञ्चित्कृत्वा द्रुततरं संलप्यसां

सारिकालापंमुक्त्वा क्रान्तकामो भव इत्यर्थः ॥ ४३ ॥

दूराद्दुत्सुकमागतेविवलितंसम्भाषिणिस्फारितं
संश्लिष्यत्यरुणंगृहीतवसनेकिञ्चिन्नतभ्रूलतं । मा
निन्याश्चरणानतिव्यतिकरेवाष्पाम्बुपूर्णेक्षणंचक्षु
र्जातमहोप्रपञ्चचतुरंजातागसिप्रेयसि ॥ ४४ ॥

शृङ्गा० मध्यमानं धूर्त्तनायकं वर्णयन्नाह ॥ दूरादिति ॥ मानिन्याश्चक्षुः प्रपञ्चचतुरं जातं व्यवहारनिपुणं जातं अहो आश्चर्य्यं कस्मिन्सति प्रेयसि जातागसि जातापराधे । कथमित्याह । दूरादुत्सुकमुत्कण्ठितं दर्शनार्थं प्रिये आगते सति विवलितं अपराधचिन्हं दृष्ट्वा प्रिये सम्भाषिणि सति स्फारितं विकसितं अयं कृतापराधोपि सम्भाषत इत्यर्थः पण्डितज्ञानात्संश्लिष्यति हठादालिङ्गति सति अरुणं। निवारयितुं प्रिये गृहीतवसने सति कोपात्किञ्चिन्नतभ्रूलतं भ्रूकुटीयुतं चरणानतिव्यतिकरेसति अश्रुपूर्णदर्शनं अतएव प्रपञ्चचातुर्य्यं एकमेव चक्षुरनेकावस्थं जातं इत्यद्भुतत्वं ॥

शान्तपक्षे पापिष्ठं प्राह हेअगासि पापे मानिनि अहंकारिणि जात आगत आः कष्टे प्रेयसि जगदुत्पत्तौ सम्यक्ज्ञाते चक्षुरेवं जातं दूरात्दूरमत्तीति दूरात्निकटमिति उत्सु अत्युत्कृष्टं कं सुखं यत्र विवलितं निष्कृतं सम्भाषिणि साक्षात्कृते सति स्फारितं विकसितं संश्लिष्यति सति अतिशयेन दृष्टे सति अरुणं गृहीतवसने कृताच्छादने कोपाञ्चित

भ्रूलतं चरणानतिव्यतिकरे सति आनमनेषु आनम्रतायां सत्यां आनन्दाश्रुपूर्णं अतएवप्रपञ्चे संसारप्रपञ्चे चतुरंघूर्त्ते। एतेनैतदुक्तंभवति बाह्यज्ञानविरोधिनि प्रभौदृष्टे निष्पापो भवति तत्साक्षात्करणं नते चक्षुर्भवति ॥ ४४ ॥

**अङ्गानामतितानवंकथमिदंकम्पश्चकस्मात्कुतो मुग्धेपाण्डुकपोलमाननमितिप्राणेश्वरेपृच्छति। तन्व्यासर्वमिदंस्वभावजमितिव्याहृत्यपक्ष्मा न्तरव्यापीबाष्पभरस्तयाचलितयानिःश्वस्यमु क्तोन्यतः॥ ४८ ॥**

शृङ्गा० विप्रलब्धांवर्णयन्नाह ॥ अङ्गानामिति॥ प्राणेश्वरइतिपृच्छति सति तया चलितया तन्व्या निःश्वस्य निःश्वासं त्यक्त्वा वाष्पभरः अन्यतः अन्यप्रकारेणत्यक्तः। किम्भूतः पक्ष्मान्तरव्यापी एतेनाश्रूणामतीवोत्तमत्वमुक्तं पक्ष्मणांसञ्चयेन पद्मिनीस्यादितिकिमित्याह। तव अङ्गानां तानवं तनुत्वं कथमिदं अज्ञानहेतोश्च अहं न जानामीत्यर्थः कस्मात् कम्पः कम्पनं कस्मात् मुग्धे सुन्दरि आननं पाण्डुकपोलं। प्रियाह। इदंतानवादिकं सर्वं स्वभावजं निसर्गजं। अथवा सुअतिशयेनयोऽभावः तवभावाभावः प्रेमाभावः तज्जनितमितिव्याहृत्य उक्त्वा तवविरहादित्यर्थः॥

**शान्तपक्षे** यःतया मायया चलितया निःश्वस्य मुक्तस्त्यक्तः तस्य कथंतानवंतनुताकस्मात्कम्पःआननंआपाण्डु-

कपोलं कस्मिन्सति इतिप्राणेश्वरेपृछति किंभूतःत्राष्पभरः वाष्पान्अश्रूणिबिभर्त्तीति अस्य विष्णोः पक्ष्मान्तरं व्याप्तुं शीलं यस्यस विष्णुर्व्याप्तिदर्शनः तत्कथमित्याह सर्वमिदंअः विष्णुस्तस्यभावः सत्तातज्जनितमतिशयेनइतिज्ञाने व्यात्द्दतिःव्यहरणं । सर्वविष्णुमयंजगादित्यादिभौतिकज्ञानात् मुक्तियोगोभवतीतिभावः ॥ ४५ ॥

पुरस्तन्व्यागोत्रस्खलनचकितोऽहंनतमुखःप्रवृत्तोवैलक्ष्यात्किमपिलिखितुंदैवहतकः । स्फुटो रेखान्यासःकथमपिसताद्दक्परिणतोगतायेन व्यक्तंपुनरवयवैःसैवतरुणी ॥ ४६ ॥

शृङ्गा० शठनायकंवर्णयन्नाह ॥ पुरइति ॥ तन्व्याःक्षीणायाः पुरःसम्मुखे गोत्रस्खलनचकितोऽहंनतमुखःसन् वैलक्ष्यात् किमपिलिखितुं प्रवृत्तः दैवहतकइत्याक्षेपे कथं-दैवहतकइत्याह । स रेखान्यासःलिखनविन्यासः तादृक्परिणतः सन् स्फुटोऽभवत् येन सैवतरुणी व्यक्ततां गता यस्यानामग्रहणे त्रासः सैवलिखिता इति आधिकत्रासहेतो दैवहतकत्वं सैव त्द्ददिस्था इत्यपि सूचितं ॥

**शान्तपक्षे** ईश्वरंप्राह रे इन हे ईश्वर हेगताय गतःअयः शुभावहोविधिर्यस्य स तथाखान्यासःखस्य शून्यस्य अन्यासः स्थूलबूद्धिःस्फुटःप्रकटो येन सैवतरुणी अवयवैरङ्गैर्व्यक्तं प्रकाशंपरिणता उसम्बोधने तादृक्स्थूलबुद्धिरसियथासैवत

रुणी अवयवैरङ्गैर्व्यक्तं विकाशं परिणता किंकृतवानसि अः इतिखेदे दैवहतक हे तस्याःतन्व्याअल्पायाः अस्तुमहान्-त्रासः । अल्पादेवनिर्यातोऽहंगोत्रस्खलनेपूर्वंचकितः किं-वा गोत्रेषु वंशेषु स्खलनं यत् तस्माच्चकितः किमपि अनिर्वच नीयं लिखितुं प्रस्थापयितुं नतमुखः नम्रानन: वैलक्ष्यं ल-ज्जा तामत्तीति वैलक्ष्यान्निर्लज्जः। एतेनैतदुक्तं भवति ईश्वरः स्थूलबुद्धिः प्रमदामयं जगत्पश्यति ज्ञानीतुनेति ॥ ४६ ॥

**कठिनहृदयेमुञ्चभ्रान्तिंव्यलीककथाश्रितांपिशु नवचनैर्दुःखंनेतुंनयुक्तमिमंजनं । किमिदमथ वासत्यंमुग्धेत्वयासुविनिश्चितंयदभिरुचितंतन्मे कृत्वाप्रियेसुखमास्यतां ॥ ४७ ॥**

शृङ्गा० शठनायकं वर्णयन् मानिनीमाह ॥ कठिनेति हेकठिनत्हृदये व्यलीककथाश्रितांभ्रान्तिं अप्रियकथाभ्रमं-मुञ्च अथवा व्यलीकःषिड्गःसामान्यस्त्रीपतिरितियावत् तथा चायमन्यस्त्रीगन्तेति भ्रमं मुञ्च 'षिड्गोव्यलीकः षट्प्रज्ञःकाम-केलिर्विदूषक' इति त्रिकाण्डशेषः। इमं जनं मादृशलोकं ख-लवचनैर्दुःखं नेतुं प्रापयितुं त्वया न युक्तं न शक्तं अथवा-हे मुग्धे त्वया अद्य इदं सत्यं निश्चितं ज्ञातं अर्थात्तदा तव यत् अभिरुचितं तत् मेममसम्बन्धि कृत्वा हे प्रिये त्वया सुखं यथास्यात्तथा आस्यतां स्थीयतां इति संक्षेपार्थः॥

**शान्तपक्षे** मनो मायां च सम्बोधयति हेत्हृत् हे मनः

कठिन 'स्वान्तं हृन्मानसं मन' इत्यमरः व्यलीककथाश्रितां भ्रान्तिं मुंच मिथ्याज्ञानं त्यज इदं जगत् किं सत्यं अपि तु अनित्यमेव अथवा इमं जनं मादृशं दुःखं नेतुं न युक्तं नशक्तं पिशुनवचनैःदुष्टालापैः। मायामाह अये मुग्धेमाये अप्रिये अस्य विष्णोःप्रिया अप्रियातस्याःसंबोधने त्वया विनिश्चितं यथा स्यात्तथा यत् अभिरुचितं इच्छाविषयं तत् मे मम कृत्वा अर्थात् अन्यत्र सुखमास्यतां स्थीयतामित्यर्थः ४७॥

मन्दंमुद्रितपांशवःपरिपतज्झङ्कारझंझामरुद्वेग
ध्वस्तकुटीरकान्तरगतच्छिद्रेषुलब्धान्तराः। क
र्मव्यग्रकुटुम्बिनीकुचतटस्वेदच्छिदःप्रावृषः प्रार
म्भेनिपतन्तिकन्दलदलोल्लासाःपयोबिन्दवः॥४८॥

शृङ्गा० प्रावृषकालस्य जलातिशयत्वात्तदा रम्भमाह ॥ मन्दमिति ॥ प्रावृषः वर्षायाःप्रारम्भे पयोविन्दवोनिपतन्ति किंभूताःकन्दलदलोल्लासाः कन्दलं वार्षिकलताविशेषः नवांकुरोवा। 'कंदलं त्रिषु कलापेप्युपरागेनवांकुरे। कलध्वनाकंदलीतुमृगगुल्मप्रभेदयोरि'ति मेदिनी। तस्य दलान्युल्लासयन्तीति मन्दं यथास्यात्तथा विलुलितपांशवः किंभूताःयाकर्म्मव्यग्रकुटुम्बिनी तस्याःकुचतटस्वेदच्छिदः कथमित्याह परिपतन्झंकारोयत्र एवंभूतोयोझंझामरुत्वार्षिकवायुः तस्य यो वेगः तेन ध्वस्तंयत्कुटीरकं कुत्सार्थेकः तत्रान्तर्गतानि यानि छिद्राणि तेषु लब्धान्तरा लब्धाव-

काशाः अतएव कुटीराभ्यन्तरे कुटुम्बिनीस्तनंस्पृशतापयो बिन्दूनामचेतनानामपि वर्षासु स्तने पतनं अन्येषामपिका-कथेतिध्वनिः ॥ ४८ ॥

**पीतस्तुषारकिरणोमधुनैवसार्द्धमन्तःप्रविश्य चषकेप्रतिबिम्बवर्त्ती । मानान्धकारमपिमान वतीजनस्यनूनंविभेदयदसौप्रससादसद्यः॥ ४९ ॥**

शृङ्गा० मानभङ्गमाह ॥ पीतस्तुषारइति ॥ नूनमुत्प्रेक्षे तुषारकिरणःपीतः मधुनासह किंभूतः चषके पानपात्रे अन्तःप्रविश्य प्रतिबिम्बवर्त्तीप्रतिबिम्बागतः मानवती जनस्य मानान्धकारं बिभेद । चन्द्रःकथंज्ञातइत्याह यत् असौ मानवती सद्यस्तत्क्षणात् पानमात्रात् प्रससाद प्रसन्नाबभूवेति पानं मानविलोपकृदिति ॥

**शान्तपक्षे** मधुनापुष्परसेनसार्द्धं तुषारकिरणःसोमः सो-मलते तियावत् चषकेपानपात्रेकृत्वापीतः । मानवतीजनस्य कामुकस्येतियावत् अन्तःप्रविश्य मानान्धकारं बिभेद यत् यस्मात् असौ सद्यःतत्कालं प्रससाद प्रसन्नतां प्राप यथा प्रतिबिम्बवर्त्तीसूर्य्यादिरेतेनैतदुक्तं भवति । योगिभिरवश्यं कामदमनार्थं सोमलतापानं कर्त्तव्यमिति ॥ ४९ ॥

**नभसिजलदलक्ष्मींसंभृतांवीक्ष्यदिष्ट्याप्रसरसि यदिकान्तेत्यर्द्धमुक्त्वाकथञ्चित् । ममपटमवलं**

**व्यप्रोल्लिखन्तीधरित्रींतदनुकृतवतीसायत्रवाचो निवृत्ताः ॥ ५० ॥**

शृङ्गा० प्रोषितभर्तृकायाः पूर्वरूपं वर्णयन्नाह ॥ नभसीति ॥ कश्चिदाह अनुपश्चात् साततत्कृतवती यत्रवाचोनिवृत्ता निरुद्धा बभूवुः किंकृत्वा ममपटमवलंब्य पृथ्वीमुल्लिखन्ती अकारणमेवभूमिंलिखन्ती इत्यर्द्धं उक्त्वा किन्तत् नभसि आकाशे जलदलक्ष्मीं दृष्ट्वा दिष्ट्यायदिप्रसरसीत्याक्षेपोक्तिः ॥

**शान्तपक्षे** शिष्यंप्राह हे जलदपुत्र हे नभसि शून्ये संसारे संभृतां लक्ष्मीं मायां वीक्ष्य प्रसरसि किंकरोषि इयंपूर्वंकथंचित् ममपटमवलंब्य अर्थान्मामभिव्याप्य धरित्रीं भूलोकं मम चित्ते प्रोल्लिखन्ती पश्चात् तत्कृतवतीयत्रवाचो निवृत्ताः अर्थात् ईश्वरभजनात् किंकृत्वा कान्तइत्यर्द्धाक्षरमुक्त्वा एतेनैतदुक्तंभवति सांसारिकींमायां त्यक्त्वा ब्रह्मभजनं कर्त्तव्यमिति ॥ ५० ॥

**इयमसौतरलायतलोचनागुरुसमुन्नतपीनपयोधरा । पृथुनितम्बभरालसगामिनीप्रियतमाममजीवितहारिणी ॥ ५१ ॥**

शृङ्गा० परकीयां वर्णयन्नाह ॥ इयमित्यादि ॥ इयमसौप्रियतमा मम जीवितहारिणी प्राणहरा किंभूता तरले चञ्चले अथ च आयते दीर्घे लोचने यस्याःसा पुनःकिंभूतागुरूम-

हान्तौ अथच समुन्नतौ अत्युच्चौ अथच पीनौ स्थूलौ पयोधरौ स्तनौ यस्याः सा पुनः किंभूता पृथुर्महान्नितम्बस्तस्य यो भरो भारस्तेन अलसगामिनी मन्दगामिनी एतेन भारशालित्वं तस्या व्यज्यते ॥

**शान्तपक्षे** ॥ जीवं सम्बोधयति आजीवितप्रिय तं जरसं आस्वादयेत्यध्याहारः कथमित्याह इयं माया मनोहारिणी तरला चञ्चला आयतं लोचनं संयतं लोचनं दर्शनं यस्याः सा तथा शेषं समानम् ॥ ५१ ॥

**सालक्तकेननवपल्लवकोमलेनपादेननूपुरवताम**
**दनालसेन । यस्ताड्यतेदयितयाप्रणयापराधा**
**त्सोऽङ्गीकृतोभगवतामकरध्वजेन ॥ ५२ ॥**

**शृङ्गा०** धृष्टनायकमाह सालक्तकेति ॥ प्रणयापराधात् यो दयितया पादेन ताड्यते स मकरध्वजेनाङ्गीकृतः ममायमितिकृत्वास्वीकृतः किम्भूतेन आलक्तसहितेन अन्यत्सुबोधम् ॥

**शान्तपक्षे** ॥ राजानंप्राह । हेइन प्रभो मदनालस हेम करध्वजेन मकरध्वजः कन्दर्पः इनः श्रेष्ठो यस्यस तथा तस्य-संबोधने एतत्संबोधनत्रयेण कामातिशयत्वं व्यज्यते यः जनः दयितया पादेन प्रणयापराधात् ताड्यते प्रहार्य्यते स भगवता ईश्वरेण किं ममायमितिकृत्वा अङ्गीकृतः अपितु ने-त्यर्थः किंभूतेन सालक्तकेन शेषं स्फुटं । एतेनैतदुक्तंभ-

वति स्त्रीसुखादिकं त्यक्त्वा ब्रह्माणि लीनोभवेति ॥ ५२ ॥

बालेनाथविमुञ्चमानिनिरुषंरोषान्मयाकिंकृतं
खेदोस्मासुनमेपराध्यतिभवान्सर्वेऽपराधामयि ।
तत्किंरोदिषिगद्गदेनवचसाकस्याग्रतोरुद्यतेनन्वेत
न्ममकातवास्मिदयितानास्मीत्यतोरुद्यते ॥ ८३ ॥

शृङ्गा० सम्प्रत्यनयोर्वाकोवाकमाह ॥ बालइत्यादि ॥ हे बाले कोमलाङ्गि किं हे नाथ हे भानिनि रुषं मुञ्च रोषान्मया किं कृतं खेदोस्मासु भवान् मे मम न अपराध्यति सर्वे अपराधामयि मम यदि नापराधः तस्माद्गद्गदेन वचसा किं रोदिषि कस्याग्रतो रुद्यते ननु भोएतन्ममाग्रतः तवाहंकास्मि । दयिता । नास्मीत्यतो रुद्यते । एतेन मानातिशयत्वं व्यज्यते । धीराया मानमिदं उक्तिप्रत्युक्तं अच्छिद्रं धीराया मन्दं जल्पितामिति बाला षोडशवर्षीया ॥

शान्तपक्षे उत्पन्नतत्त्वसाक्षात्कारस्य मायाया वाकोवाकं हेमानिनि अहंकारिणि प्राह नाथ किं इत्यादि सुगमम्॥५३॥

नीत्वोच्चैर्विक्षिपन्तःकृततुहिनकणासारसङ्गान्परा
गान्कौन्दानानन्दितालीनतितरसुरभीन्भूरिशो
दिङ्मुखेषु । एतेतेकुङ्कुमाक्तस्तनकलशभरा
स्फालनादुच्छलन्तःपीत्वाशीत्कारिवक्रंशिशुह
रिणदृशांहैमनावान्तिवाताः ॥ ८४ ॥

शृङ्गा० हिमकालस्य कामजनकातिशयत्वात् तद्वायु-

वर्णयन्नाह ॥ नीत्वेति ॥ हैमना वाता वान्ति किं कृत्वा शिशुहरिणदृशां वक्त्रंपीत्वा शीत्कारि हिमात्कामाच्च कुङ्कुमेनाक्तं स्पृष्टं यत् स्तनतटं तस्मिन्नतिशयेन यत् आस्फालनमाघातस्तस्मादुत्पतन्तः तं स्पृष्ट्वा ऊर्द्धं गच्छन्तः हिमकालेकुंकुमालेपनं प्रशस्तमिति सूचितं। किं कुर्वन्तः भूरिशः कौन्दान्परागान् कुन्दपुष्पसम्बन्धिनोरेणून् नीत्वा दिङ्मंडलेषु उच्चैर्विक्षिपन्तः किंभूतान् आनन्दिता आकृष्टा अलयो भ्रमरा यत्र तान्तथा कृताहिमकणासारसङ्गा यैः तान्तथा । शुक्लत्वात् अन्यो हि कामी दिङ्मुखेषु प्रौढास्त्रीमुखेषु विक्षिप्य बालावक्त्रं पिबतीतिवाक्यार्थध्वनिः ॥ ५४ ॥

श्रुत्वातन्व्यानिशीथेनवघनरसितंविश्लथाङ्गंपतित्वाशय्यायांभूमिपृष्ठेकरतलधृतयादुःखितालीजनेन । सोत्कंठंमुक्तकंठंकठिनकुचतटाघातशीर्णाश्रुबिन्दुस्मृत्वास्मृत्वाप्रियस्यस्खलितमृदुवचोरुद्यतेपान्थवध्वा ॥ ५५ ॥

शृंगा० प्रोषितभर्तृकांवर्णयन्नाह ॥ श्रुत्वेति ॥ पान्थयुवत्या रुद्यते क्रंद्यते तन्व्या क्षीणाङ्ग्या किंकृत्वा निशीथेऽर्द्धरात्रे नवमेघशब्दं श्रुत्वा शय्यायां विश्लथाङ्गं यथातथा भूमिपृष्ठे पतित्वा दुःखितालीजनेन करतलधृतया सोत्कंठं यथास्यास्तथा मुक्तकंठं । कठिनकुचतटे यःआघातःपतनं तेन शीर्णा अश्रुबिन्दवोयत्र इतिक्रियाविशेषणं किंकृत्वा प्रि

यस्यस्मृत्वा प्रियंस्मारंस्मारंस्मृत्यर्थस्यचेति कर्मणिषष्ठी स्खलितकोमलवाक्यंयथास्यात् एतेनविरहातिशयत्वं सूचितं ॥

**शान्तपक्षे** ॥ मुक्तंवर्णयति मुक्तिविशिष्टंमुक्तकं प्रशंसायांकः ठंशून्यं निर्वाणंयस्य स्मारंस्मारं मायया युवत्या रुद्यते किम्भूतया दुःखितालीजनेन तुष्टिपुष्टिमेधेत्यादिभिः करतल धृतया अतन्व्या महत्या शेषंसमानम् ॥ ५५ ॥

**श्लिष्टःकण्ठेकिमितिनमयामूढयाप्राणनाथश्चुम्ब**
**त्यस्मिन्वदनविधुतिःकिंकृताकिन्नदृष्टः । नोक्तः**
**कस्मादितिनववधूचेष्टितंचिन्तयन्तीपश्चात्तापंव**
**हतितरुणीप्रेम्णिजातेरसज्ञा ॥ ५६ ॥**

शृङ्गा० आरूढयौवनां विरहिणीं वर्णयन्नाह ॥ कलहान्तरितांवा । श्लिष्टेति ॥ तरुणी पश्चात्तापं वहति प्रेम्णि जाते सति किंभूतारसज्ञा रसः श्रृंगारादिस्तज्जानातीति । नववधूचेष्टितं बालचेष्टां चिन्तयन्तीध्यायन्ती कितदित्याह मयाकण्ठे प्राणनाथः किंनश्लिष्टः ततएवमूढया अस्मिन्चुम्बतिसति वदनविधुतिः मुखकम्पनंकिंकृतं किंवानदृष्टः किंवानोक्तःइतिचिन्ताबाहुल्यात्तापबाहुल्यंसूचितम् ॥

**शान्तपक्षे** ॥ उत्पन्नात्मसाक्षात्कारं पुरुषं दृष्ट्वा मायाविलपति । अन्यत्सर्वंसमानम् ॥ ५६ ॥

**श्रुत्वानामापियस्यस्फुटघनपुलकंजायतेङ्गंसम**
**न्तात्दृष्ट्वायस्याननेन्दुंभवतिवपुरिदंचन्द्रकान्ता**

नुकारि । तस्मिन्नागत्यकण्ठग्रहणसरभसंस्था
यिनिप्राणनाथेभग्नामानस्यचिन्ताभवतिममपुन
र्वज्रमय्याःकदानु ॥ ८७ ॥

शृङ्गा० उत्कण्ठिताविशेषंवर्णयन्नाह ॥ श्रुत्वेति ॥ यस्यप्रियस्यनामश्रुत्वा इदमङ्गंसमन्तात्चतुर्दिक्षुतः स्फुटघनपुलकंजायते । यस्यमुखचन्द्रंदृष्ट्वा इदंवपुश्चन्द्रकान्तानुकारिजायते चन्द्रकान्तमणिसदृशंभवति स्रवत्घर्म्मजलमितियावत् । एतेनरोमाञ्चस्वेदौव्याख्यातौ । आगत्यतस्मिन् कण्ठग्रहणसरभसस्थायिनिकण्ठश्लेषंकुर्वति वज्रमय्यामममानस्य चिन्ता कदाचिद्भग्ना भविष्यति मानस्य कदाभेदो भविष्यति तस्मिन्कण्ठलग्नेसति सर्वान्यङ्गानिसुखेमायांत्येव तदीक्षणतच्छ्रवणतदधरपानादिभविष्यतीति ध्वन्यते एतेनोत्कण्ठातिशयत्वं व्यज्यते ॥

शान्तपक्षे ॥ प्रारब्धयोगोमनोरथमाह । तस्मिन्प्राणनाथेआत्मनिदृष्टेकदामम मानस्य अंहकारस्यचिन्ताभग्नाभविष्यति किंभूतावज्रमयी आः कष्टे स कः यन्नामश्रुत्वारोमाञ्चः यंदृष्ट्वानिर्मलंवपुर्भवति कथंभूते कण्ठग्रहणसरभसस्थायिनिइत्यर्थः ॥ ५७ ॥

रामाणांरमणीयवक्त्रशशिनःस्वेदोदबिन्दुप्लुतोव्या
लोलालकवल्लरींप्रचलयन्धुन्वन्नितम्बाम्बरं ।
प्रातर्वातिमधौप्रकामविकसद्राजीवराजीरजोजा

लामोदमनोहरोरातिरसग्लानिंहरन्मारुतः ॥५८ ॥

शृङ्गा० सुखदायकत्वात् प्रातर्वायुंवर्णयन्नाह॥ रामाणामिति ॥ प्रातस्त्योवायुर्वहति किंकुर्वन् रामाणां रतिरसग्लानिंहरन् कथमित्याह । वायोः सौगंध्यं शैत्यं मान्द्यञ्च वर्णयति प्रकामातिशयेन लसन्ती राजीवराजी पद्मश्रेणी तस्या यत्रजस्तस्य यः पुञ्जस्तस्य आमोदेन सौगंध्येन मनोहरः एतेनसौगंध्यं । रमणीयमुखचन्द्रस्य घर्म्मजलबिन्दुनाप्लुतोव्याप्तः एतेनशैत्यमुक्तं व्यालोला या अलकवल्लरी तां प्रचलयन् चञ्चीकुर्वन् । नितम्बाम्बरं नितम्बवस्त्रं धुन्वन् कम्पयन् । एतेनमांद्यमुक्तं अथ च कामुकोपि कामिन्याः सर्वमिदंअलकरचनादिकं करोतीति काव्यार्थध्वनिः ॥ ५८ ॥

अङ्गंचन्दनपाण्डुपल्लवमृदुस्ताम्बूलताम्राधरोधा
रायन्त्रजलाभिषेककलुषेधौताञ्जनेलोचने । अ
न्तःपुष्पसुगन्धिरार्द्रकबरीसर्वाङ्गलग्नाम्बरंरामाणां
रमणीयतांविदधतिग्रीष्मापराह्णागमे ॥ ५९ ॥

शृङ्गा० ग्रीष्मोपचरितंवर्णयन्नाह ॥ अङ्गमिति ॥ रामाणां नारीणां इमेरमणीयतांविदधति कुत्र ग्रीष्मापराह्णागमे निदाघसंध्यासमये अङ्गंचन्दनपाण्डु अधरस्ताम्बूलताम्रः पल्लवइवमृदुः लोचनेधौताञ्जने धारायन्त्रजलाभिषेकेणकलुषे अव्यक्तरागे स्वर्णरूप्यादिमुद्रितंसुगन्धिजलपूरितं धारायन्त्रमिति कामिनांमुदे आर्द्रकबरी स्निग्धःकेशवेशः अ-

न्तः पुष्पेणसुगन्धिः सौगंध्यनीलांशुकमितिपाठोवा । एता-
निग्रीष्मागमे सुखदानीतिव्यज्यते ॥

शान्तपक्षे ॥ रामाणांभागवतानां सतांगच्छतां इमेकं-
सुखंअभ्यन्तरेविदधति नेतियावत् काकुकृतोनिषेधः कुत्र
ग्रीष्मापराह्ले संसारतापत्यागे केतेइत्याह सौगन्ध्यनीलांशु
अङ्गंचन्दनपाण्डुशेषं समानम् ॥ ५९ ॥

**वरमसौदिवसोनपुनर्निशाननुनिशैववरंनपुनर्दि
वा । उभयमेतदुपैत्वथवाक्षयंप्रियजनेननयत्रस
मागमः ॥ ६० ॥**

शृङ्गा० विरहिणींवर्णयन्नाह ॥ वरमिति ॥ असौदिव-
सो वरं न पुनर्निशा वरं ननु निशैव वरं न पुनर्दिवा वरं
अथवा एतदुभयमपिक्षयंयातुयत्रप्रियजनेनकान्तेनसहस
ङ्गमोनभवति वरमित्यजहल्लिङ्गं ॥

शान्तपक्षे ॥ हे प्रियजन हेइन यत्रसमागमोनसम्यक्-
ज्ञानोत्पत्तिर्नेतदुभयमेवक्षयं उपैतु यत्रज्ञानोत्पत्तिः सदिवा-
वरमितिशेषंसमानम् ॥ ६० ॥

**लोलैर्लोचनवारिभिःसशपथैःपादप्रणामैःप्रियैर
न्यास्ताविनिवारयन्तिकृपणाःप्राणेश्वरंप्रस्थितं ।
पुण्याहंव्रजमङ्गलंसुदिवसंप्रातःप्रयातस्यतेयत्स्ने
होचितमीहितंप्रियतमत्वंनिर्गतःश्रोष्यसि ॥ ६१ ॥**

शृङ्गा० धीरायाभविष्यत्प्रोषितभर्तृकायाउक्तिंवर्णयन्ना-

ह ॥ लोलैरिति ॥ अन्याःस्त्रियः प्रस्थितं प्रस्थानोन्मुखं प्रियं वारयन्ति कैर्लोचनवारिभिरश्रुभिः किंभूतैर्लोलैः अस्थिरैः पादप्रणामैः शपथसहितैः प्रियैर्मधुरैः कृपणाःकातराः अहन्तुवदामि हे प्रियतमव्रजेति प्रातःप्रयातस्यतवपुण्याहमस्तु सुदिवसोस्तु तेतव यत्स्नेहोचितमीहितंचेष्टितं हेप्रियतम त्वंनिर्गतःसन्श्रोष्यसि एतेनजीवितंत्यक्षामीतिस्नेहोचितध्वनिः ॥

**शान्तपक्षे** ॥ हेप्रिय त्वंव्रजपरिव्राजकोभव प्रयातस्य प्रकृष्टज्ञानस्यतवपुण्याहमस्तु सुदिवसोस्तु निर्गतःसन् अचितं असंचितं। इतितं श्रोष्यसि हेत्वत्स्नेहत्वय्येवस्नेहोय स्यइति कथमेवंकर्त्तव्यमित्याह अन्यास्ताअन्यैरस्ताःक्षिप्ताः प्राणेश्वरंप्रभुंनित्यंप्रस्थितंविनिवारयन्ति नास्तिकाएव प्रभुं न मानयन्ति अश्रुभिरुपलक्षिताः शोकाक्रान्ताः पादप्रणामै रुपलक्षिताः प्रियैःप्रणताः प्रियैःप्रियकर्म्मभिः एतेनैतदुक्तंभवति नास्तिकाएव प्रभुं नमानयंति भवन्तः परिव्राजकाभवन्त्विति ॥ ६१ ॥

लग्नानांशुकपल्लवेभुजलतानद्वारदेशेर्पितानोवा
पादतलेतयानिपातितंतिष्ठेतिनोक्तंवचः । काले
केवलमम्बुदालिमलिनेगन्तुंप्रवृत्तःशठस्तन्व्याबा
ष्पजलौघकल्पितनदीपूरेणबद्धःप्रियः ॥ ६२ ॥

शृङ्गा॰ बालायाभविष्यत्प्रोषितभर्तृकायाश्चेष्टामाह ॥ल-

भेति ॥ तन्व्याप्रियोरुद्धः बाष्पजलौघकल्पितनदीपूरेण कस्मिन्काले अम्बुदालिमलिनेमेघमालाश्यामलेसमये किंभूतःप्रियः शठः पुनः केवलं गन्तुं प्रवृत्तः। अंशुकपल्लवेनलग्ना द्वारदेशेभुजलतानार्पिता तया तन्व्या पादतलेनानिपतितं तिष्ठेतिवचोनोक्तं एतत्सर्वंप्रगल्भाचरितं बालातुकेवलं रोदनोपायशालिनीति ॥

**शान्तपक्षे ॥** परिव्राजकार्थंगंतुंप्रवृत्तःप्रियः तन्व्यानबद्धःननिरुद्धःतत्रहेतुमाह कथंभूतः प्रपंचचतुरः तथाचप्रातरेवागमिष्यामीत्युक्त्वागतइत्यर्थःकालेकथंभूते अबाष्पजलसमूहनदीपूरे शेषंसमानम् ॥ ६२ ॥

**नजानेसंमुखायातेप्रियाणिवदतिप्रिये । सर्वाण्यङ्गानिमेयान्तिश्रोत्रतांकिमुनेत्रताम् ॥ ६३ ॥**

शृङ्गा० प्रेमातिशयं वर्णयन्नाह ॥ न जान इति ॥ अहं न जाने संमुखायाते प्रिये सति मे मम सर्वाण्यङ्गानि नेत्रतां यान्ति तंद्रष्टुमित्यर्थः प्रिये प्रियाणि वदति सति सर्वाण्यङ्गानिश्रोत्रतां यान्ति तच्छ्रोतुमित्यर्थः नेत्राभ्यां श्रोत्राभ्याञ्च द्रष्टुंश्रोतुं न समर्थास्मीत्यनुरागातिशयो व्यज्यते ॥

**शान्तपक्षे ॥** हेमेलक्ष्मि तव सर्वाण्यङ्गानि अवयवानि श्रोत्रतां यान्ति नेत्रतां वा तन्नजाने त्वमतिशयेन पश्य शृणु वाकस्मिन्सति प्रिये बन्धौ संमुखायाते प्रत्यक्षमायातं सम्यक्ज्ञानं यस्य तस्मिन् तथा एवंभूते प्रियाणि वदति

सति त्वमुदासीनाभूत्वा पश्य शृणु इत्यर्थः ॥ ६३ ॥

**विरहविषमःकामोवामस्तनुंकुरुतेतनुंदिवसगण
नादक्षश्वासौव्यपेतघृणोयमः । त्वमपिवशगोमा-
नव्याधेर्विचिन्तयनाथहेकिसलयमृदुर्जीवेदेवंक
थंप्रमदाजनः ॥ ६४ ॥**

शृङ्गा० पुरुषमानं वर्णयन्नाह ॥ विरहेति ॥ हेनाथ चि-न्तय भावय एवंसति प्रमदाजनः कथं जिवेत् किम्भूतः किस-लय इव मृदुःकथमित्याह कामः तनुं शरीरं तनुं क्षीणां कुरुते किम्भूतः विरहेषु विषमः असौयमश्च व्यपेतघृणः निर्दयः दिवसगणनादक्षः अद्य कल्य वा वामा मरिष्यति इति-दिवसं गणयति त्वमपिमानव्याधेर्वश्यः आयत्तःएतेन मानं त्यजेतिध्वनिः ॥

शान्तपक्षे ॥ कश्चित् योगी राजानं प्रत्युपदेशमाह हे-नाथ हेराजन् चिन्तय ध्यानं कुरु अर्थात् ईश्वरस्य प्रमदा-जनः प्रमदायाजनः स्त्रीप्रियइतिभावः कथंजीवेत् कामःवि-रहविषमः क्षीणंशरीरं कुरुते सतिसंगमेऽधिकश्वासचलनात् आयुःक्षयः अतएवयमः निर्दयः दिवसगणनादक्षः त्वमपि अहंकारवशः पुनः किंभूतः किसलयमृदुः कोमलश-रीरः एतेनैतदुक्तंभवति स्त्रीसुखादिकंत्यक्त्वा ब्रह्मध्यानपरो भवेति ॥ ६४ ॥

**पादासक्तेसुचिरमिहतेवामताकैवकान्तेसन्मार्गे**

**स्थेप्रणयिनिजनेकोपनेकोपराधः । इत्थंतस्याःप रिजनकथाकोपवेगोपशान्तौबाष्पोद्भेदैस्तदनुस हसानास्थितंनप्रयातम् ॥ ६८ ॥**

शृङ्गा० धीरायामानिन्याःस्तम्भंवर्णयन्नाह ॥ पादास क्तइति ॥ तस्या बाष्पोद्भेदैरश्रूद्गमैर्न स्थितं न प्रयातं कस्यां सत्यांइत्याह इत्थंपरिजनकथयाकोपवेगोपशान्त्यां । केयंकथा इत्याह हेकोपने मानिनि सुचिरं पादासक्ते प्रणयिनिजने कोऽपराधः इहवसन्ते पुष्पसमये वामस्वभावा का हेकान्ते तववामप्रकृतिः सन्मार्गस्थे सत्पथस्थेसतीत्यर्थः । मानादश्रु भवति सखिवचनात्तत्नपतति नवातिष्ठतीतिस्थितत्वं प्रया तत्वं द्वयमपिनभूतम् ॥

शान्तपक्षे ॥ आःकोपनप्रचण्डहे प्रणयिनिजने पादा सक्तेसति तपसे पर्वताश्रितेसति पादाःप्रत्यन्तपर्वताइत्यमरः कथंभूतेसन्मार्गस्थे कान्तेपरंब्रह्मणि कस्यब्रह्मणोऽन्तोयत्र तस्मिन् तेतवकाइववामता त्वंकथंभूतः इकःकामचर्च्चापरः पुनः किंभूतः अपराधःमत्वर्थीअच्अपराधीत्यर्थःयेन संसारे तिष्ठसि इत्थंअमुना प्रकारेण तस्य परिजनकथाकोपवेगोप- शान्तौ तदनुपश्चात् तैःस्थितंन किंतुप्रयातं कथंभूतैः बा- ष्पोद्भेदैः वाष्पस्यउद्भेदोयेषुतैरित्यर्थः ॥ ६५ ॥

**पुराभूदस्माकंनियतमविभिन्नातनुरियंततोनुत्वं प्रेयान्वयमपिहताशाःप्रियतमाः । इदानींनाथ**

**स्त्वंवयमपिकलत्रंकिमपरंमयाप्तंप्राणानांकुलि**
**शकठिनानांफलमिदम् ॥ ६६ ॥**

शृङ्गा० धीरायामानमाह ॥ पुरेति ॥ यूयञ्चवयञ्चवयं- तेषामस्माकं इयंतनुःपुराअभिन्ना आसीत् ततोनुत्वंप्रेयान् अतिशयेन प्रियोपि वयञ्चप्रियतमा नियतं निश्चितं । इदा- नीं त्वं नाथ ईश्वरः कर्म्मकर्तृत्वात् नानावल्लभागमनात् वयञ्चकलत्रं अन्यत्किंवाच्यं वज्रकठिनानां प्राणानां फलं मयाप्तं प्राणानस्फुटयन्तीतिध्वनिः ॥

शान्तपक्षे ॥ उत्पन्नतत्त्वज्ञानंपुरुषं दृष्ट्वामायावदति । इदं त्यागरूपं फलं शेषं समानम् ॥ ६६ ॥

**मुग्धेमुग्धतयैवनेतुमखिलःकालःकिमारभ्यतेमा**
**नंधत्स्वधृतिंबधानऋजुतांदूरेकुरुप्रेयसि । सख्यैवं**
**प्रतिबोधिताप्रतिवचस्तामाहभीताननानीचैःशं**
**सहृदिस्थितोननुसमेप्राणेश्वरःश्रोष्यति ॥ ६७ ॥**

शृङ्गा० उत्तमांवर्णयन्नाह ॥ मुग्धेति ॥ एवमनेनप्रका रेण सख्याप्रतिबोधितासतीभीताननाप्रत्युत्तरं प्राह नीचैः शंस कथय ननुभो स प्राणेश्वरः हृदिस्थितः सन्श्रोष्यतीति एतेनोत्तमत्वं सूचितं । किंप्रतिबोधिताइत्याह । मुग्धेअज्ञे अखिलः कालःसर्वः समयोमुग्धतयैवनेतुमारभ्यते मानंधत्स्व धृतिंधैर्य्यंबधानबंधय ऋजुतां अवक्रतां दूरे कुरु प्रियतमे ॥ सखीवाचा प्रिया मानं नधत्ते सोत्तमा मता ॥

**शान्तपक्षे ॥** कृतयोगाभ्यासां सखीं सांसारिकीत्वभ्रा-न्त्या काचित् वदति प्रेयसि त्विष्णौ मानं प्रमाणं धत्स्वइति-पूर्वार्द्धेनप्रश्नः उत्तरार्द्धेनोत्तरं तत्रप्राणेश्वरः आत्मा श्रोष्यति इदमुपलक्षणं पश्यतीति तथा च सर्वेषां कर्मसाक्षी स एवेतिभावः ॥ ६७ ॥

**पीतोयतःप्रभृतिकामपिपासितेनतस्यामयाऽधरर सःप्रचुरःप्रियायाः । तृष्णाततःप्रभृतिमेद्विगुणत्व मेतिलावण्यमस्तिबहुतत्रकिमत्रचित्रम् ॥ ६८ ॥**

शृङ्गा० परकीयांवर्णयन्नाह ॥ पीतइति ॥ तस्याः यतः प्रभृति मया कामपिपासितेन अधररसः पीतः ततः प्रभृति तृष्णावाञ्छाद्विगुणमितियावत् तावत् वासजले पीते सति तृ-ष्णाशान्तिर्नभवतीति इहद्विगुणत्वमेतीति चित्रं तत्र अधर-रसे बहुलावण्यमस्ति यतः पीयते तन्नीरसं न भवतीति एतत्तु बहुलावण्यं सलिलमिति किंवालवणस्य भावो ला-वण्यं तद्यत्रास्तिलवणरसे पीते तृष्णावृद्धिर्भवति किमत्रचित्रं॥

**शान्तपक्षे ॥** तस्यगुरोः आसमन्तात् अधररसओष्ठपु-टविभागात् योरसःउपदेशरूपः मया पीतः अर्थात्श्रुतः ततः प्रभृति तृष्णान अतः हेमे लक्ष्मी त्वं याः गच्छ कथंभूताकामपि पासितेप्रिया तत्रउपदेशे लावण्यं द्विगुणत्वमेति अत्रसंसार-बहुचित्रं किमस्ति अपितुकिमपि नहीतिभावः ॥ ६८ ॥

**क्ष्मास्थितासिकरभोरुघनेनिशीथप्राणाधिकोव**

सतियत्रजनःप्रियोमे। एकाकिनीवदकथंनबिभे
षिबालेनन्वस्तिपुंखितशरोमदनःसहायः ॥ ६९ ॥

शृङ्गा० अभिसारिकां वर्णयतिवाकोत्वाक्येन ॥ क्वप्रस्थितेति॥ हेकरभोरु करभः करिशावकस्तस्यहस्तेन सदृशौ ऊरु यस्याः सातथा करभशब्देन गौणीवृत्याहस्तिशावकहस्तउच्यते किंवाकरभस्तु कराद्वहिः एतेनादौस्थूलः पश्चात्क्षीणऊरुर्यस्याइतिवा त्वं घने निशीथे निबिडार्द्धरात्रे परिणतेकुत्र चलितासि साप्राह यत्र मम प्राणाधिकः प्रियोवसति एकाकिनीकथंनबिभेषि ननु भोपुंखितशरोमदनः सहायोऽस्ति एतेनकामाधिक्यं व्यज्यते ॥

शान्तपक्षे ॥ गुरुसमीपे व्रजन्तीं परिव्राजिकां कश्चिद्वदति । क्वेति । प्राणाधिकः गुरुः । नुवितर्के पुंखितशरोमदनः नमेसहायः इदमुपलक्षणं क्रोधादयोपि न तथाचयेषां कामक्रोधादिकमस्ति तेषामेवभयोत्पत्तिर्नान्येषामिति पर्यवसितोऽर्थः ॥ ६९ ॥

लीलातामरसाहतोन्यवनितानिःशङ्कदष्टाधरःकश्चि
त्केसरदूषितेक्षणइवव्यामील्यनेत्रेस्थितः । मुग्धा
कुड्मलिताननेनदधतीवायुंस्थितातस्यसाभ्रान्त्या
धूर्त्ततयाचवेपथुमतीतेनानिशंचुम्बिता ॥ ७० ॥

शृङ्गा० धृष्टनायकंवर्णयन्नाह ॥ लीलेति ॥ कश्चित्लीलापद्माहतः अर्थाद्दयितया अन्यस्त्री निर्भयदष्टाधरः धूर्त्तत-

यातदनुतत्पद्मकेसरदूषितेक्षणे इवनेत्रे व्यामिल्य मुद्रयित्वा-स्थितः अथचमुग्धा तत्तथेतिभ्रान्त्याकुड्मलिताननेन मुद्रितमुखेन वायुं दधतीस्थिता अथच भावोदयेनवेपथुमतीसकम्पा तेन अनिशं चुम्बिता ॥

**शान्तपक्षे** ॥ कश्चिद्योगीकार्पटिकंकृतस्त्रीसंगं शिष्यं भर्त्सयन्नाह लीलेति कुड्मलिताननेन मौनस्थितेनवेपथुमतीतेन कंपरहितेन त्वया सामुग्धाचुंबिता सा तस्यमम शिष्यान्तरस्य भ्रान्त्या वायुंदधती तवाग्रेस्थिता शेषंपूर्ववत् किमिदंकृतंदूरेगच्छेतिभावः ॥ ७० ॥

**स्फुटतुहृदयंकामःकरोतुतनुंतनुंनसखिचटुलप्रेम्णाकार्य्यंपुनर्दयितेनमे । इतिसरभसंमानोद्रेकादुदीर्य्यवचस्तयारमणपदवीशारङ्गाक्ष्यासस-भ्रममुदीक्षिता ॥ ७१ ॥**

श्रृङ्गा० चतुरायामानमाह ॥ स्फुटत्विति ॥ हेसखि हृदयं स्फुटतुकामः तनुंशरीरं तनुं क्षीणां करोतु प्रकामं यथास्यात्तेनदयितेन मम कार्य्यं नास्ति किम्भूतेन चटुलप्रेम्णा चञ्चलप्रेम्णा मानोद्रेकात्सरभसंवचः उदीर्य्य तयाहरिणाक्ष्यारमणपदवीप्रियपथः उदीक्षिता सशङ्कंयथास्यात् एतेनान्तर्गतस्नेहो व्यज्यते ॥

**शान्तपक्षे** ॥ मानोद्रेकात् प्रमाणाधिक्यात् इतिवचः उदीर्यसरभसं यथास्यात्तथा तयारमणपदवी सन्मार्गः प-

रिव्राजिकामार्गेइतियावत् वीक्षितादृष्टा शेषंपूर्ववत्तथाच प्रियंअनित्यप्रेमाणांदृष्ट्वा संसारंचानित्यं दृष्ट्वा परिव्राजिका-जातेत्यर्थः ॥ ७१ ॥

**पश्याश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियंश**
**य्यासंप्रतिकोमलाङ्गिकठिनेत्यारोप्यमांवक्षसि ।**
**गाढौष्ठग्रहपीडनाकुलतयापादाग्रसंदंशकेनाकृ**
**ष्याम्बरमात्मनोयदुचितंधूर्तेनतत्प्रस्तुतम् ॥७२॥**

शृंगा० मानव्यपगमोपायमाह ॥ पश्येति ॥ धूर्त्तेनयत्-प्रस्तुतंतदुचितं किन्तदित्याह ॥ हेकोमलाङ्गिपश्य इदानीं आलिंगनच्युतचन्दनरजःपुञ्जप्रकर्षादियंशय्याकठिनाकर्क-शाइति मांवक्षसिआरोप्य पादाग्रसंदंशकेन पादाग्रंयन्त्रवि-शेषः तेनाम्बरं वस्त्रं आकृष्य गाढं यत्ओष्ठग्रहपीडनं तेनयाआकुलतातयाउपलक्षितांमामित्यर्थः किंचिद्व्यपदेशे-नमानिन्यामानभंजनमपेक्षितमिति ॥

**शान्तपक्षे** ॥ आहेधूर्त्तइनहेश्लेषविशीर्ण तत्पश्यब्रह्म पश्य किंभूतंप्रस्तुतंयदुचितं यत्किं देहात्मनःशरीरस्य अ-म्बरंशून्यं आकृष्यआनीयशून्ये शरीरंनिधायेत्यर्थः जी-वात्मानंवा केन पादाग्रसंदंशकेन यन्त्रभेदेन इयंशय्या-चन्दनरजःपुञ्जप्रकर्षं प्राप्यकोमला तया माययाभां लक्ष्मीं वक्षसि आरोप्य लक्ष्मीमायामयीतिज्ञात्वा किंभूताअङ्गिनः अवयविनः कर्कशाइतिज्ञानंयत्रसा गाढाष्ठग्रहपीडनाकुलेति

सम्बोधनंगाढमुखोयोग्रहः शनैश्चरादिस्तस्यपीडनेनाकुल-ग्रहपीडमाकुर्वति ॥ ७२ ॥

कथमपिप्रत्यावृत्तेप्रियेस्खलितोत्तरेविरहकृशया
कृत्वाव्याजंप्रकल्पितमश्रुतत् । असहनसखी
श्रोत्रप्रातिप्रमादससंभ्रमंप्रचलितदृशाशून्येगेहे
समुच्छ्वसितंपुनः ॥ ७३ ॥

शृङ्गा० कलहान्तरितांधीरांवर्णयन्नाह ॥ कथमपीति ॥ हेप्रिये स्खलितोत्तरे गोत्रस्खलनेनयुक्ते प्रत्यावृत्ते कान्त प्रत्यागमनेसति विरहकृशयामयाव्याजं कृत्वा अश्रुक-ल्पितं क्रन्दितं । पुनरपिगेहे समुच्छ्वसितंकिम्भूतया प्रच-लितदृशा प्रचलितादृक्यस्याः साकथमित्याह असहमाना याःसख्यःतासांश्रोत्रप्राप्तिप्रमादः तेनससंभ्रमं यथास्यात्तथा-सख्यःसर्वज्ञास्यन्तोतिसंभ्रमत्वं ॥

शान्तपक्षे ॥ उत्पन्नतत्त्वज्ञानंपुरुषंदृष्ट्वामायारोदिति । प्रत्यावृत्ते प्राणस्यप्रत्यावृत्तिराकर्षणं यत्र तस्मिन्प्रियेसति कथंभूते अस्खलितोत्तरे भ्रमरहिते असहमानाः याः सख्यः धृत्यादयःतासांस्वश्रोत्रे याप्राप्तिः तया प्रमादने ससंभ्रमं-यथास्यात्तथामायया उच्छ्वसितं शेषंतुल्यम् ॥ ७३ ॥

आदृष्टिप्रसरांप्रियस्यपदवीमुद्वीक्ष्यनिर्विस्मया
विच्छिन्नेषुपथिष्वहःपरिणतौध्वान्तेसमुन्मीलति
। दत्त्वैकंसशुचागृहंप्रतिपदंपान्थस्त्रियास्मिन्क्षणे

सोभूदागतइत्यमन्दवलितग्रीवंपुनर्वीक्षितः ॥७४ ॥

शृङ्गा० बालांप्रोषितभर्तृकां वर्णयन्नाह । आदृष्टीति ॥ पान्थस्त्रियाअमन्दवलितग्रीवं यथास्यात्तथापुनर्वीक्षितः अस्मिन्क्षणेपि आगतोसौ अभूत्इतिउक्त्वा गृहं प्रतिएकं पदं दत्त्वाकस्मिन्सति अहःपरिणतौदिवसावसाने ध्वान्तेअन्धकारे समुन्मीलतिसति किंभूतया निर्विस्मयाविशीर्णयाकथमित्याहप्रियस्यपन्थानमादृष्टिप्रसरं दृष्टिप्रसरपर्य्यन्तं उद्वीक्ष्य पथिषु विच्छिन्नेषु दृष्टिः सप्तविधातत्रदीर्घवंक्रेत्यादि ॥

शान्तपक्षे ॥ परिव्राजकं कश्चित् संबोधयति ॥ हेपान्थ हेपरिव्राजक सकश्चित् परिव्राजकार्थआगतोभूत् अस्मिन्क्षणेएतत्काले विशीर्णयास्त्रियामाययादृष्टः शेषंतुल्यं एतेनैतदुक्तंभवति यातेचपरिव्राजकत्वे मायानाशो भवतीति ॥ ७४ ॥

आयातेदयितेमनोरथशतैर्नीत्वाकथंचिद्दिनंवैद
ग्ध्यापगमाज्जडेपरिजनेदीर्घांकथांकुर्वति । दृष्टा
स्मीत्यभिधायसत्वरतरंव्याधूयचीनांशुकंतन्व
ङ्ग्यारतिकातरेणमनसानीतःप्रदीपःशमम्॥ ७५ ॥

शृङ्गा० आगताप्रियायाउत्कण्ठामाह ॥ आयातइति ॥ तन्वङ्ग्यादीपः शमं क्षयं नीतः रतिकातरेण क्रीडाप्रार्थकेन मनसा किंकृत्वा चीनांशुकं व्याधूय तद्व्याजमाह । केनचिदहंदृष्टास्मीत्यभिधाय कथमित्याह परिजने दीर्घां कथां

कुर्वंति कस्माद्वैदग्ध्यापगमाद्धेतोः अतएवजडे कार्य्या-नभिज्ञे किंकृत्वा दयिते आयातेसति मनोरथशतैः एवं-विलासोरात्रौ कर्त्तव्यइत्यादिकैर्दिनंकथमपि कष्टसृष्टया नी-त्वा एतेनोत्कण्ठातिशयोऽस्याव्यज्यते ॥

**शान्तपक्षे** ॥ मनसाप्रदीपःतत्वज्ञानं आनीतः कथंभूते-न तन्वङ्ग्यारतिकातरेण तन्वङ्ग्यासह यारतिस्तस्याः कारते-ण स्त्रीरतिभीतेनेत्यर्थःदिनमितिजातावेकवचनं कस्मात् वैद-ग्ध्यापगमात् कस्मिन्सति दयितेउपदेशके आगतेसति कथं भूते जडे विषयाज्ञानरहिते पुनःकिंभूते अपरिजनेचीनाशुकं व्याधूय परित्यज्य हेदृष्टअहमस्मीत्यभिधायआगतेइत्यर्थः७५

**अनालोच्यप्रेम्णःपरिणतिमनादृत्यसुत्हृदस्त्व**
**यामुग्धेमानःकिमितिसरलेप्रेयसिकृतः । समा**
**कृष्टाह्येतेप्रलयदहनोद्भासुरशिखाःस्वहस्तेनाङ्गा**
**रास्तदलमधुनारण्यरुदितैः ॥ ७६ ॥**

शृङ्गा० कलहान्तरितां धीरां वर्णयन्नाह ॥ अनालो-च्यइति ॥ हेमुग्धे त्वयाएतेप्रलयदहनोद्भासुरशिखादीप्ता अङ्गाराः स्वहस्तेनसमाकृष्टाः तदरण्यरुदितैरलंव्यर्थं दी-प्ताङ्गाराकर्षणं हितापाय भवति । कथमित्याह प्रेम्णःपरिणामं-अनालोक्य नदृष्ट्वासुहृदः अनादृत्य सरलेअवक्रे प्रेयसि मानः कृतः कथमधुना रोदिषीति सख्युपालम्भः ॥

**शान्तपक्षे**॥हेमुग्ध ईमानःकाममानः कृतःस्वहस्तेनअं-

गाराःकृष्टाः किम्भूता उद्भासुरशिखादीप्ताः इप्रेयसिसंसारे-
हेसरलतदधुनारोदनैरलंपश्चादतीवरोदितव्यमिति ॥ ७६ ॥

शून्यंवासगृहंविलोक्यशयनादुत्थायकिञ्चिच्छनै
र्न्निद्राव्याजमुपागतस्यसुचिरंनिर्वर्ण्यपत्युर्म्मुखं ।
विश्रब्धंपरिचुंब्यजातपुलकामालोक्यगण्डस्थलीं ल
ज्जानम्रमुखीप्रियेणहसताबालाचिरंचुम्बिता ॥७७॥

शृङ्गा० बालायाश्चतुरनायकं वर्णयन्नाह ॥ शून्यमिति ॥
बाला हसताप्रियेणचिरंचुम्बिता लज्जानम्रमुखीकथंलज्जे-
त्याहवासगृहंशून्यं सखीरहितंविलोक्य शय्यायाउत्थाय-
पत्युर्मुखं निर्वर्ण्य निद्राकपटिनस्तस्यमुखं विश्रब्धजात-
विश्वासं यथास्यात्तथापरिचुंब्य गण्डस्थलीं जातपुलकां
आलोक्य अयंजागरणशील इतिबुद्धयालज्जा अतःप्रियस्य-
हासः अत्रचशून्यंवासगृहमित्यादिपदैरतिशयोव्यज्यते ना-
नाजातीयप्रबन्धकारीयः सचतुरोनायकः ॥

शान्तपक्षे ॥ कार्पटिकंशिष्यंभर्त्सयन्नाह हे उपागतपरि-
व्राजक त्वयाबालाचिरंचुम्बिता किंकृतं वासगृहशून्यंअनि-
त्यंविलोक्य निद्राव्याजं स्य नाशयेत्यर्थः शेषंतुल्यम् ॥ ७७ ॥

जातानोत्कलिकास्तनौनलुलितौगात्रंनरोमाञ्चि
तंवक्त्रंस्वेदकणाञ्चितंनसहसायावच्छठेनामुना ।
दृष्टेनैवमनोहृतंधृतिमुषाप्राणेश्वरेणाद्यमेतत्केना
पिनिरुप्यमाननिपुणोमानःसमाधीयताम् ॥७८॥

शृङ्गा० परकीयामुत्तमांमानिनीमाह ॥ जातेति ॥ तत्तस्माद्द्यकेनप्रकारेणमानःसमाधीयतां मानः कथंसम्यग्वहनीयइत्याह तेनशठेनप्राणेश्वरेण धृतिमुषाधैर्यहारेण ममनोहृतंनेत्युपलक्षणं शिरश्चालनत्वादाह उत्कलिका उत्कंठा नजाता अपितुजातैवस्तनौ नलुलितौ मृदूभूतौआलिंगनार्थमितियावत् गात्रं नरोमाञ्चितं अतिशयेनरोमाञ्चितं वक्त्रंस्वेदकणाञ्चितंव्याप्तं किम्भूतोमाननिपुणः अहंकारेण निपुणः एतेनयस्मिन्दृष्ट एवभावोदयस्तस्मिन् कथंमानोवहनीयइत्यर्थः ॥ ७८ ॥

दृष्टःकातरनेत्रयाचिरतरंबध्वाञ्जलिंयाचितः प
श्चादंशुकपल्लवेनविधृतोनिर्व्याजमालिंगितः ।
इत्याक्षिप्ययदासमस्तमघृणोगन्तुंप्रवृत्तःशठःपूर्वं
प्राणपरिग्रहोदयितयामुक्तस्ततोवल्लभः ॥ ७९॥

शृङ्गा० प्रोषितभर्तृकायादशमींदशामाह ॥ दृष्टइति ॥ दयितयापूर्वंप्राणंपरिग्रहस्त्यक्तः ततोवल्लभोमुक्तः आदौकातरनेत्रयादृष्टः पश्चादञ्जलिंबध्वायाचितः पश्चादंशुकपल्लवेनविधृतः निर्व्याजमालिङ्गितइति सर्वमाक्षिप्य यदानिर्दयः शठःगन्तुं प्रवृत्तःतदाप्राणास्त्याज्याइतिदशमीदशा ॥

**शान्तपक्षे** ॥ सर्वंत्यक्त्वायदागन्तुं प्रव्राजितुं शठोधूर्त्तःप्रवृत्तः तदादयितया मायया प्राणपरिग्रहो मुक्तः मृताइव मायाभूत् ततोवल्लभस्त्यक्तइतिशेषंतुल्यम् ॥ ७९ ॥

अङ्गुल्यग्रनखेनबाष्पसलिलंनिक्षिप्यनिक्षिप्यकिं
तूष्णींरोदिषिकोपनेबहुतरंफूत्कृत्यरोदिष्यसि ।
यस्यास्तेपिशुनोपदेशवचनैर्म्मानेऽतिभूमिंगतेनिर्वि
ण्णोऽनुनयंप्रतिप्रियतमोमध्यस्थतामेष्यति॥८०॥

शृङ्गा० गुरुमानवत्यामानापनोदनार्थं काचित्सखी-प्राह ॥ अङ्गुल्यग्रेति ॥ हेकोपने अङ्गुल्यग्रनखेन बाष्पस-लिलंअश्रुजलं निक्षिप्यनिक्षिप्यतूष्णींकिंरोदिषि फूत्कृत्य-फूत्कारध्वनिंकृत्वा बहुतरंरोदिष्यसि तत्रहेतुमाह यस्यास्ते पिशुनोपदेशवचनैः खलोपदेशवचनैः माने अतिभूमिंगते उत्कर्षतांगतेसति प्रियतमोनिर्विण्णःसन् विरक्तःसन् अनु-नयंप्रतिमध्यस्थतां अनुनयेमध्यस्थत्वं गमिष्यति पूर्ववत्प्रि-योनभवतीतिभावः ॥

शान्तपक्षे ॥ नूतनशिष्यंप्रति कश्चिदुपदेशमाह यस्य-तव मानेअहंकारे अतिभूमिंगते प्रियतमःगुरुः निर्विण्णः आस्ते अनुपश्चात्नयं नीतिं प्रतिकोपने त्वयि मध्यस्थतां एष्यति उदासीनो भविष्यतीति भावः शेषंस्फुटम् एतेनैतदु-क्तं भवति रोदनादिकं परित्यज्य गुरूपदेशरतो भवेति ॥८०॥

तद्वक्त्राभिमुखंसुखंविनमितंदृष्टिःकृतापादयोःत
स्यालापकुतूहलाकुलतरेश्रोत्रेनिरुद्धेमया । पाणि
भ्यांचतिरस्कृतःसपुलकःस्वेदोद्गमोगण्डयोःसख्यः
किंकरवाणियान्तिशतधायत्कंचुकेसंधयः॥८१॥

शृङ्गा० मानार्थं शिक्षयन्तीं सखीं नायकेप्रेमातिशयवती मानकरणासमर्थाकाचित्प्रत्युत्तरमाह ॥ तद्वक्त्रेति ॥ तद्वक्त्राभिमुखंमुखं विनमितंविशेषेणनम्रीकृतं दृष्टिःपादयोः कृता तस्यनायकस्य आलापकुतूहलाकुलतरे श्रोत्रेमयानिरुद्धे गण्डयोः सपुलकः स्वेदोद्गमः पाणिभ्यांतिरस्कृतः आच्छादितः हेसख्यः यत्कंचुके कूर्पासके संधयः सीवनानि शतधा यान्ति विदीर्णाभवन्ति तत्किंकरवाणि एतेन प्रेमातिशयोऽव्यज्यते ॥

शान्तपक्षे ॥ उत्पन्नतत्त्वज्ञानं पुरुषं दृष्ट्वा मायाधृत्यादिसखीर्वदति हेसख्यः यत्कंचुकेत्वचि संधयःशतधा यान्तितत्किंकरवाणि कथंधैर्यकर्त्तव्यमितिभावः शेषंपूर्ववत् ॥ ८१ ॥

कृतोदूरादेवस्मितमधुरमभ्युद्गमविधिःशिरस्या
ज्ञान्यस्ताप्रतिवचनमुच्चैःप्रणमितम् । नदृष्टेःशै
थिल्यंमिलनइतिचेतोदहातिमेनिगूढान्तःकोपा
त्कठिनहृदयेसंवृतिरियम् ॥ ८२ ॥

शृङ्गा० अन्तर्मानवतींकश्चिन्नायकःप्राह ॥ कृतोदूरादेवेति ॥ हेकठिनहृदयेनिगूढान्तःकोपात् प्रच्छन्नकोपतः इयंसंवृत्तिः सम्यगावरणं इतिहेतोः मेमम चेतोमनः दहातिउत्तप्तंभवति तथाचतवान्तःकोपोमाभूदित्यर्थः मिलनेसंगमेसति दूरादेव स्मितमधुरंयथास्यात्तथा अभ्युद्गमविधिः उत्थानविधिः त्वयाकृतः आज्ञाशिरासि न्यस्ता प्रतिव-

चनंउच्चैः प्रणमितं दत्तंदृष्टेः शैथिल्यंन इदंतु सर्वमुचित-मेवपरंतु संवरणं नकर्त्तव्यमितिपर्य्यवसितोऽर्थः ॥

**शान्तपक्षे** ॥ कश्चित् योगी लक्ष्मीमाह हेमे हे लक्ष्मि कठिनत्वदये हे मिलने अर्थात्तवसंगमे चेतोदहतिकथं-भूतं निगूढान्तःकोपात् निगूढान्तःकोपमत्तीतितत्तथा य-तस्त्वत्संगमात् स्मितमधुरं यथास्यात्तथा इयंसंवृतिर्ज्ञान-प्रतिबन्धकं मयाअभ्युद्गमविधिः परिब्राजकविधिःकृतः गु-रोराज्ञाशिरसिन्यस्ता प्रतिवचनं प्रतिवाक्यं प्रणमितं मम-दृष्टेः शैथिल्यंन अतस्त्वयागन्तव्यामितिभावः ॥ ८२ ॥

**एकस्मिन्शयनेविपक्षरमणीनामग्रहेमुग्धयासद्यः**
**कोपपराङ्मुखंशयितयाचाटूनिकुर्वन्नपि । आ**
**वेगादवधीरितःप्रियतमस्तूष्णींस्थितस्तत्क्षणा**
**न्माभूत्सुप्तइवैषमन्दवलितग्रीवंपुनर्वीक्षितः ॥८३॥**

शृङ्गा० औत्सुक्यरूपभावस्योदयमाह ॥ एकस्मिन्निति॥ विपक्षरमणीनामग्रहे अन्यस्त्रीनामग्रहणे मुग्धयानायिकया-प्रियतमः आवेगात्अवधीरितः अवज्ञातःसन् तुष्णींस्थितः चाटूनि प्रियवाक्यानि कुर्वन् अपिएकस्यां शय्यायां सद्य-स्तत्क्षणात् कोपपराङ्मुखं यथास्यात्तथा शयितयाप्रियया एषप्रियतमः सुप्तइवमाभूदिति अमन्दवलितग्रीवंयथास्यात्त-था पुनर्वीक्षितः पुनर्वीक्षणेन औत्सुक्यरूपभावस्यउदयोजात इत्यवगम्यते चटुचाटुप्रियप्रायमितिवचनप्रक्रमेहेमचन्द्रः८३

**मलयमरुतांव्राताग़ताविकासितमल्लिकापरिमल भरोभग्नोग्रीष्मस्त्वमुत्सहसेयदि । घनघटयितुं निःस्नेहंयएवनिवर्त्तनेप्रभवतिगवांकिन्नश्छिन्नंस एवधनञ्जयः ॥ ८४ ॥**

शृङ्गा० विरहिण्या उत्कण्ठातिशयमाह ॥ मलयमरुतामिति ॥ हेघन हेमेघ मलयमरुतां मलयानिलानां व्राताः समूहाः गताः वसन्तकालोऽतीतइत्यर्थः ग्रीष्मोपि भग्नः व्यतीतः कथंभूतः विकसितमल्लिकानां परिमलस्य विमर्दोत्थजनमनोहरगन्धस्य भरोऽतिशयो यत्र स तथा निःस्नेहं तं नायकं मयासह घटयितुं यदि त्वमुत्सहसे तदा गवां विनिवर्त्तने यः प्रभवति स एव धनंजयोऽर्ज्जुनो भवति नो अस्माकं किं छिन्नं गवामितिछलतः पशुत्वोत्कीर्त्तनेन नायकस्यावैदग्ध्यमुक्तम् 'विमर्द्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः ॥ ८४ ॥

**स्वंदृष्ट्वाकरजक्षतंमधुमदक्षीबाविचार्य्येर्षयाग च्छन्तीक्वनुगच्छसीतिविधृताबालापटान्तेमया । प्रत्यावृत्तमुखीसबाष्पनयनामांमुंचमुंचेतिसाको पात्प्रस्फुरिताधरायदवदत्तत्केनविस्मर्य्यते ॥८५॥**

शृङ्गा० कश्चिन्नायको गच्छन्तीं बालां मानिनीं विधृत्य तत्सखीमुपलक्ष्याह ॥ स्वंदृष्ट्वेति ॥ स्वं स्वकीयं करजक्षतं नखक्षतं दृष्ट्वा मधुमदक्षीबामधुमदेन मत्ता इवमत्ता अविचार्य्य

ईर्षया गच्छन्ती बाला ननु भो क्व गच्छसि इति कृत्वा पटान्ते मया विधृता सती मां मुंच मां मुञ्च इति यत् अवदत् तत् केन विस्मर्य्यते अपितु केनापि न किंभूता प्रत्यावृत्तमुखी विमुखी पुनःकिम्भूता कोपात् प्रस्फुरिताधरा अतिक्रुद्धा पुनः किम्भूता सबाष्पनयना साश्रुनयना पटं मुञ्च इति नोक्का मां मुञ्च इति यदवदत्तत् केन विस्मर्य्यते एतेन प्रेमातिशयत्वं व्यज्यते ॥ ८५ ॥

सालक्तकंशतदलाधिककान्तिरम्यंरत्नौघधाम
निकरारुणनूपुरंच ॥ क्षिप्तंभृशंकुपितयातरलो
त्पलाक्ष्यासौभाग्यचिह्नमिवमूर्ध्निपदंविरेजे ॥ ८६॥

शृङ्गा० अधीराया धृष्टनायकमाह ॥ सालक्तकमिति ॥ कस्यचिन्नायकस्य मूर्ध्नि कुपितया क्षिप्तं पदं विरेजे कथंभूतं सालक्तकं आलक्तकेन सह वर्त्तमानं पुनः किम्भूतंशतदलाधिककान्तिरम्यं कमलाधिककान्त्या रम्यं पुनः किम्भूतं रत्नौघस्य रत्नसमूहस्य धामनिकरेण दीप्तिसमूहेन अरुणं यन्नूपुरं तद्युक्तम् 'प्रग्रहः शुचिमरीचिदीप्तयो धाम केतुघृणिरश्मिपृष्णय' इतिहेमचन्द्रः कथंभूतया तरलोत्पलाक्ष्या तरले चंचले उत्पले इव अक्षिणी यस्याः तया कमिव सौभाग्य चिह्नमिव एतेन नायकस्य धृष्टत्वं व्यज्यते ॥

शान्तपक्षे ॥ ध्यानस्थितस्य मूर्ध्निगुरोः पदं विरेजे सालक्तकं आरक्तवर्णसहितं शतदलाधिककान्तिरम्यं सहस्र-

पत्रकमलमध्यस्थं रत्नौघधामनिकरारुणनूपुरं शिवरूपं तरलोत्पलाक्ष्या मायया कुपितया क्षिप्तं त्यक्तमित्यर्थः॥८६॥

कपोलेपत्रालीकरतलनिरोधेनमृदितानिपीतो
निःश्वासैरयममृतहृद्योऽधररसः ॥ मुहुःकण्ठे
लग्नस्तरलयतिबाष्पःस्तनतटंप्रियोमन्युर्ज्जातस्त
वनिरनुरोधेनतुवयं ॥ ८७ ॥

शृङ्गा० अधीरां मानिनीं कश्चिच्चतुरनायकः प्राह ॥ कपोल इति ॥ हेनिरनुरोधे निर्गतोऽनुरोधो यस्याः सा तथा तत्संबोधने मन्युः क्रोधः तव प्रियो जातः न तु वयं विभक्तिविपरिणामेनान्वयः मन्युप्रिययोः साम्यमाह कपोले पत्राली करतलनिरोधेन मृदिता आश्लिष्टा अयं अमृतादपि हृद्योऽधररसः निःश्वासैर्निपीतः मुहुर्वारंवारं कण्ठे लग्नोबाष्पस्तनतटं तरलयति सर्वमेतन्नायककार्य्यं तत्कारित्वात् मन्युरेवप्रियो जातः इत्यर्थः 'मन्युः पुमान् क्रुधि दैन्ये शोके च यज्ञेच' तिमेदिनीकारः ॥ ८७ ॥

लाक्षालक्ष्मललाटपट्टमभितःकेयूरमुद्रागलेवक्रे
कज्जलकालिमानयनयोस्ताम्बूलरागोदयः ॥
दृष्ट्वाकोपविधायिमण्डनमिदंप्रातश्चिरंप्रेयसोली
लातामरसोदरेमृगदृशःश्वासाःसमाप्तिंगताः ॥ ८८॥

शृङ्गा० धीराखण्डितांवर्णयन्नाह ॥ लाक्षालक्ष्मेति ॥ मृगदृशो वामायाः प्रातः काले लीलातामरसोदरे लीला-

पद्ममध्ये श्वासाः समाप्तिं गताः तत्रैव शान्ता एतेनश्वासस्य उत्तमत्वं व्यज्यते किंकृत्वा प्रेयसः प्रियतमस्य इदं मण्डनं कोपविधायि दृष्ट्वा । किन्तदित्याह ललाटपार्श्वे लाक्षाचिह्नं एतेन बन्धविशेषे तस्याश्चरणमस्य ललाटे लग्नं गले केयूरमुद्राचिह्नं एतेन गाढकण्ठग्रह उक्तः वक्रे कज्जलकालिमा एतेन तस्या नयनचुम्बनमिति व्यज्यते नयनयोस्ताम्बूलरागोदयः इत्यनेन तया अस्य नयनचुम्बनं कृतं इति व्यज्यते किन्तु नयनानुरागातिशयो जागरणान्मुखे श्यामिका श्रमातिशयात् गलागलभावः संभ्रमागमनेन लाक्षाचिह्नं सद्भावश्च व्यज्यते किन्तु ललाटे लाक्षा गले केयूरं वक्रे कज्जलं नयने ताम्बूलमतिचित्रं मण्डनं तस्याश्च वैदग्ध्यमिति ध्वनीनां प्राचूर्य्यादतीवोत्तमत्वं काव्यस्येति ॥ ८८ ॥

तप्तेमहाविरहवह्निशिखावलीभिरापाण्डुरस्तन
तटेहृदयेप्रियायाः ॥ रथ्यालिवीक्षणनिवेशित
लोलदृष्टेर्नूनंछनच्छनितिबाष्पकणाःपतन्ति ८९ ॥

शृङ्गा॰ विरहिण्यास्तापातिशयं वर्णयन्नाह ॥ तप्त इति ॥ प्रियाया हृदये बाष्पकणाः पतन्ति छनच्छनितिशब्दं कृत्वा छनच्छनिति लोकोक्तानुकरणं कथंभूते महाविरहवह्निशिखावलीभिः महाविरहाग्निशिखासहस्रैस्तप्ते आपाण्डुरस्तनतटे वह्निशिखातप्तस्य वैवर्ण्यं भवति विरहाच्च किं-

भूताया रथ्या प्रतोली तद्वीक्षणे निवेशिता लोलदृष्टिर्य्यस्या-तप्तेवस्तुनिजलकणापाते छनछनीति शब्दो भवत्येव ॥

शान्तपक्षे ॥ उत्पन्नतत्वज्ञानं दृष्ट्वा मायायास्तापातिश यमाह सर्वं पूर्ववत् ॥ ८९ ॥

**चिन्तामोहविनिश्चलेनमनसामौनेनपादानतःप्र**
**त्याख्यानपराङ्मुखःप्रियतमोगन्तुंप्रवृत्तोधुना।**
**सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैर्लोचनैःश्वा**
**सोत्कम्पकुचंनिरीक्ष्यसुचिरंजीवाशयावारितः॥९०॥**

शृङ्गा० कलहान्तरिताया धीराया दृष्टिं वर्णयन्नाह ॥ चिन्तेति ॥ प्रियतमः कयाञ्चित् जीवाशया जीवप्रत्याशया वारितः लोचनैर्निरीक्ष्य किंतत् श्वासोत्कम्पकुचं किम्भूतैः सव्रीडैः अधुना मानं कृत्वा उपेक्षितः अधुनैव कथं वि-लोकनीयः इति व्रीडा लज्जा तत्सहितैः अलसैरतिभावात् निरन्तरगतं यद्बाष्पं तेनाकुलैः एतेन विरहिणो रोदनञ्च किम्भूतः गन्तुंप्रवृत्तः । कथमित्याह प्रत्याख्यानेन खण्ड-नेन पराङ्मुखः मौनेन प्रत्याख्यात इत्यर्थः किंभूतः पा-दानतः केन मनसा किम्भूतेन चिन्तामोहविनिश्चलेन मानचिन्ताविशेषेणालोलत्वं अत्र लेशालंङ्कारः ॥ ९० ॥

**तन्वङ्ग्यागुरुसन्निधौनयनजंयद्वारिसंस्तम्भितं**
**तेनान्तर्गलितेनमन्मथशिखीसिक्तोनुषङ्गोद्भवः॥**
**मन्येतस्यनिरस्यमानकिरणस्यैषामुखेनोद्गताश्वा**

सामोदसमाकुलालिनिकरव्याजेनधूमावलिः॥९१॥

शृङ्गा० धीराया विरहिण्याः श्वासादिकं वर्णयन्नाह ॥ तन्वङ्ग्या इति ॥ अहं मन्ये शङ्के तन्वङ्ग्या मन्मथशिखो कामाग्निस्तेन वारिणान्तर्गतेन सिक्तः कथंभूतः अनुषङ्गोद्भवः प्रियस्मरणादुत्पन्नः तेन केन यत् नयनजं वारि अश्रु स्तम्भितं गुरुसन्निधौ एतेन धैर्य्यमुक्तं तस्य कामाग्नेः निरस्यमानकिरणस्य निवार्य्यमाणस्य मुखेन धूमावलिर्निर्गता कथमित्याह श्वासामोदसमाकुला ये अलयः भ्रमराः तेषां यो निकरः समूहः तद्व्याजेन एतेन पद्मिनीत्वं व्यज्यते अश्रुणोऽतीवोत्तमत्वं सूचितं धूमावलिरित्यनेन च नायिकाया उत्कण्ठातिशयत्वं च व्यज्यते ध्वनीनाम् बाहुल्यादुत्तम काव्यत्वं ॥ ९१ ॥

भ्रूभेदोरचितश्चिरंनयनयोरभ्यस्तमामीलनंरोद्धुं
शिक्षितमादरेणहसितंमौनेभियोगःकृतः ॥ धैर्य
ङ्कर्त्तुमपिस्थिरीकृतमिदंचेतःकथञ्चिन्मयावद्धो
मानपरिग्रहेपरिकरःसिद्धिस्तुदैवेस्थिता ॥ ९२ ॥

शृङ्गा० मानङ्कर्त्तुं शिक्षयन्तीं काञ्चित्सखींप्रति स्वकीया धीरा वदति ॥ भ्रूभेद इति ॥ मया मानपरिग्रहे परिकरो बद्धः परिकर इति कर्त्तव्यता 'भवेत्परिकरः संघे पर्य्ये कपरिवारयोः। प्रगाढगात्रिकाबन्धे समारम्भविवेकयोरि' तिमेदिनी किन्तदित्याह भ्रूभेदो भ्रूकुटिरचितः कृतः नयनयो-

रभ्यस्तमामीलनं कृतं हसितं रोद्धुं आदरेण शिक्षितं मौने अभियोग उद्यमातिशयः कृतः धैर्य्यमपि कर्त्तुं चेतः स्थिरी कृतं एतत्सर्वं मानचिन्हं किन्तु सिद्धिर्दैवे स्थिता न जाने तस्मिन् दृष्टेसति तिष्ठति मत्वेति उत्तमात्वं तस्याः ॥ ९२ ॥

देशैरन्तरिताशतैश्चसरितासुर्वीभृतांकाननैर्य
त्नेनापिनयातिलोचनपथंकान्तेतिजानन्नपि ॥
उद्ग्रीवश्चरणार्द्धरुद्धवसुधःकृत्वाश्रुपूर्णेदृशौतामा
शांपथिकस्तथापिकिमपिध्यायन्मुहुःक्षीयते ॥९३॥

शृङ्गा० प्रवासे दक्षिणनायकं वर्णयन्नाह ॥ देशैरिति ॥ पथिकः क्षीयते क्षीणो भवति तां आशां दिशं प्रत्याशां वा लक्षीकृत्य चिरंध्यायन् अश्रुपूर्णे दृशौ कृत्वा किम्भूतः उ. द्ग्रीवः चरणार्द्धरुद्धवसुधः चरणार्द्धेन रुद्धा वसुधा येन एतेन तावदुत्कण्ठितत्वं सूचितं तत्किमित्याह सा आशादे शैः शतैरन्तरिता आच्छादिता सरितां शतैः पर्वतैर्ग्रामैर्न- गरैः परं सुवोधं अतिदूरे पथि कस्य एतेनोत्कण्ठा मौग्ध्यं च येनाङ्गुष्ठमात्रेण भूमिं स्पृशन्नाशां पश्यतीति ध्वन्यते ॥ ९३॥

कोपस्त्वयाहृदिकृतोयदिपङ्कजाक्षिसोस्तुप्रिय
स्तवाकिमत्रविधेयमन्यत् ॥ आश्लेषमर्पयमद
र्पितपूर्वमुच्चैर्मह्यंसमर्प्पयमदर्पितचुम्बनञ्च ॥ ९४ ॥

शृङ्गा० मध्यमायाश्चतुरनायकं वर्णयन्नाह ॥ कोप इति ॥ हे पङ्कजाक्षि कमलनयने यदि कोपस्त्वया कृतः ना-

हं त्वद्यः तदा स एव प्रियोऽस्तु अन्यत् किमत्र विधेय-मास्ति मदर्प्पितं मया दत्तमाश्लेषं अर्प्पय मय्येतियावत् किं-वा मदर्प्पितचुम्बनं मय्येवार्पय । वक्रोक्तिकुशलः कान्त श्चतुरः परिकीर्त्तितः ॥

**शान्तपक्षे** ॥ जाततत्त्वज्ञानः कश्चित् मायां वदति ॥ हे पंकजाक्षि त्वयाकोपः कृतः अर्थात् मयि स सांसारिकः तव प्रियोऽस्तु मया अन्यत् किं विधेयं किं कर्त्तव्यं अपितु किमपि न मया अर्ष्पितं मह्यं मह्नीसम्बन्धि चुम्बनादिकं अत्र सांसारिके निजप्रिये अर्प्पय मह्यमिति मह्यां भवः "दिगादिभ्यो" यदिति यत् आश्लेषणमपि तत्रैवार्प्पयेत्यर्थः॥

**ऊरुद्वयंमृगदृशःकदलस्यकाण्डौमध्यञ्चवेणिर**
**तुलंस्तनयुग्ममस्याः ॥ लावण्यवारिपरिपूरित**
**शातकुम्भकुम्भौमनोजनृपतेरभिषेचनाय ॥९८॥**

**शृङ्गा०** प्रथमोढायौवनं वर्णयन्नाह ॥ ऊरुद्वयमिति ॥ मृगदृशः ऊरुद्वयं कदलकाण्डौ कदलिकावृक्षौ अस्या रो-मावली रम्या स्तनयुगं भातीत्यर्थः उत्प्रेक्षे मनोजनृपतेर-भिषेचनाय लावण्यवारिपूर्णसुवर्णकुम्भाविति अभिषेककाले मङ्गलकदलीरोपणबद्धा माला अभिषेकघटा उत्प्रेक्ष्याः ॥

**शान्तपक्षे** आः हे मनः अजनृपतेः न जायते इति अजं ब्रह्म तदेव नृपतिस्तस्य सेचनाय अवगाहनाय शात-कुम्भःऔ महादेवे लावण्यवारिपरिपूरित ऊर्महादेवः चिन्तक

मृगदृश ऊरुद्वयं अस्य दूरीकुरु कथं कन्दलस्य काण्डाविव जातौ मध्यरोमबहुलं स्तनयुग्मं त्यजेदितिभावः ॥ ९५ ॥

**चपलहृदयेकिंस्वातन्त्र्यात्तथागृहमागतश्चरणपतितःप्रेमार्द्रार्द्रःप्रियःसमुपेक्षितः ॥ तदिदमधुना यावज्जीवंनिरस्तसुखोदयारुदितशरणादुर्ज्जातीनांसहस्वरुषांफलम् ॥ ९६ ॥**

शृङ्गा० काचित् सखी असाध्यमानरूपरसा भासवतीमाह ॥ चपलत्हृदयइति हे चपलत्हृदये किंकुतः स्वातंत्र्यात् त्वया अद्य गृहागतः प्रियः समुपेक्षितः किंभूतः प्रेमार्द्रार्द्रः प्रेमातिशयेन स्निग्धः अतएव चरणपतितः मानोपनोदनार्थं कृतप्रणामः एतादृशः प्रियो यस्मादुपेक्षितः तत् तस्मात् अधुना इदानीं यावज्जीवं रुदितशरणा रुदितमेव शरणं यस्याः तथासती दुर्ज्जातीनो दुष्टानां रुषां क्रोधानां फलं सहस्व कथंभूता निरस्तसुखोदया निरस्तः सुखस्य उदयो यस्याः सा तथा सुखविहीनेत्यर्थः ॥

शान्तपक्षे ॥ तथा गृहमागतः ध्यानेन दृष्टः प्रियः ईश्वरः किं समुपेक्षितः अये त्हृत् मनः आसंबोधने हेनिरस्तसुखोदय हेरुदितशरण आसमन्ताद्भावेन दुर्ज्जातीनां चरणपतितः सन् रुषां फलं सहस्वेत्यर्थः शेषं सुबोधम्॥९६॥

**रात्रौवारिभरालसाम्बूदरवोद्विग्नेनजाताश्रुणापान्थेनात्ममनोजदुःखपिशुनंगीतंतथोत्कंठया ॥**

आस्तांजीवितहारिणःप्रवसनालापस्यसंकीर्त्तनंमा
नस्यापिजलाञ्जलिःसरभसंलोकेनदत्तोयथा॥९७॥

शृङ्गा० वर्षासमये मानिनी नायकप्रयत्नंविनापि स्वयं मानभङ्गमाह ॥ रात्राविति ॥ पान्थेन आत्ममनोजदुःखपिशुनं सूचकं यथास्यात्तथा गीतं किंभूतेन जाताश्रुणा पुनः किंभूतेन रात्रौ वारिभरेण आलस्ययुक्तायेऽम्बुदास्तेषां रवेण उद्विग्नेन वारिभरालसेत्यनेन मेघानां स्थिरत्वं सूचितं अतो हेसखि प्रवसनालापस्य प्रवसनं विदेशगमनं तस्य आलापः अहं विदेशं यास्यामीति कथनं यस्य तस्य अतएव जीवितहारिणः संकीर्त्तनं आस्तां सरभसं यथास्यात्तथा मानस्यापि जलाञ्जलिः दत्तः जलाञ्जलिः अञ्जलिस्थजलं कृदभिहितोभावोद्रव्यवत्प्रकाशते इतिन्यायात् यथा अन्यलोकेन दत्तस्तथातेन प्रकारेणेत्यर्थः एतेन नायकदर्शनतत्कथाश्रवणौत्सुक्यं व्यज्यते तेन च तमानयेत्यपि व्यज्यते ॥ ९७ ॥

हारोजलार्द्रवसनंनलनीदलानिप्रालेयशीकरमु
चस्तुहिनांशुभासः ॥ यस्येन्धनानिसरसानिच
चन्दनानिनिर्वाणमेष्यतिकथंसमनोभवाग्निः॥९८॥

शृङ्गा० विरहिणश्चिन्तां ब्रुवन्नाह हार इति समनोभवाग्निः कामाग्निः कथं निर्वाणमेष्यति शान्तो भविष्यति यस्य एतानि इन्धनानि काष्ठानि दीपकानि वा तानि कानि हारः पुष्पर-

चितः जलार्द्रवसनं जलेनार्द्रवसनं वस्त्रं नलनीदलानि पुट-किनीपत्राणि प्रालेयशीकरमुचः हिमकणवर्षिणः तुहिनांशु भासः चन्द्ररश्मयः सरसानि द्रवीभूतानि चन्दनानिइत्यर्थः

**शान्तपक्षे** ॥ हेमनः सभवाग्निः संसाराग्निः कथं निर्वाणं एष्यति गमिष्यति यस्य भवाग्नेः हारादीनि इन्धनानि एतेनैतदुक्तं भवति सर्वमिदं परित्यज्य मोक्षपथप्रवृत्तं भवेति ॥ ९८ ॥

**तन्वीशरत्त्रिपथगापुलिनेकपोलौलोलेदृशौरुचि**
**रचञ्चलखंजरीटौ ॥ तद्बन्धनायसुचिरार्पितसुभ्रु**
**चापचाण्डालपाशयुगलाविवशून्यकर्णौ ॥ ९९ ॥**

**शृङ्गा०** सामान्यतः सर्वासां सहजरूपं वर्णयति ॥ तन्वीति ॥ इयं तन्वी शरत् त्रिपथगा शरत्कालस्य गङ्गाइवेति रूपकमिदं कपोलौ पुलिने तोयोत्थिततटे लोले चञ्चले दृशौ नयने चञ्चलखंजरीटौ चञ्चलखंजनौ तद्बन्धनार्थमिव सुचिरार्पितो भ्रूरूपपुष्पचापो येन तस्य चाण्डालस्य पाशयुगलाविव शून्यकर्णौ शून्ययुक्तकर्णौ अत्र चाण्डालपदेन कामदेवो ज्ञेयः एतेन नयनदैर्घ्यनिरोधनमवेक्षत इत्युत्प्रेक्षा व्यज्यते भ्रुवोर्दैर्घ्यं कुटिलत्वं च सूचितं॥ ९९॥

**हारोयंहरिणाक्षीणांलुठतिस्तनमण्डले ॥ मुक्ता**
**नामप्यवस्थेयंकेवयंस्मरकिङ्कराः ॥ १०० ॥**

**इत्यमरूशतकं परिपूर्णम् ॥**

शृङ्गा० कामुकानां श्लाघामाह ॥ हारोयमिति ॥ हरिणाक्षीणां स्तनमण्डले हरीयं लुठति मुक्ताकृत एव हारः एतेन मुक्तानां मौक्तिकानामपि अथ च निर्वाणपदप्रपन्नानामपि एषावस्था वयं स्मरकिङ्कराः कामशायकशिरस्का एतेनाचेतनानामियमवस्था सचेतनानामस्माकं स्तनमण्डलमुपासितुमुचितमेव किञ्च मण्डलस्यातिमनोहरत्वं मुक्ताश्रितत्वात् हरिणाक्षीत्यनेन चक्षुषोः सौन्दर्य्यमुक्तं कामिनोस्तननयनयोरातिशयमनोहरत्वाच्च ग्रंथसमापने उभयमुपवर्णितं ॥

शान्तपक्षे ॥ मण्डलेश्वरराजानं कश्चित् योगी वदति-आः संबोधने हेस्मर किंकर कामुक हे मण्डले द्वादशराजधान्यां लुठति सति वयं इति स्तन शब्दं कुरु अहंकारवान् भवेति यावत् मुक्तानां तु इयं शाश्वती अवस्था स्थितिः के ब्रह्मणि नतु मण्डले यत्र हरिणाक्षीणां मायानां हारो हरणं भवति एतेनैतदुक्तं भवति स्त्रीराज्यसुखादिकं त्यक्त्वा ब्रह्मणि लीनो भवेति ॥ १०० ॥

॥ इत्यमरूशतकटीका समाप्ता ॥

खेमराज श्रीकृष्णदास
श्रीवेंकटेश्वर छापखाना
मुंबई.

# घटकर्परं काव्यम्

## सटीकम्

श्रीगणेशाय नमः ॥ निचितं खमुपेत्य नीरदैः
प्रियहीनाहृदयावनीरदैः ॥ सलिलैर्निहितं रजः
क्षितौ रविचन्द्रावपि नोपलक्षितौ ॥ १ ॥

श्रीगणेशायनमः ॥ यस्याः पतिर्देशान्तरं गतस्तां नायिकां पञ्चभिः श्लोकैरभिधत्ते ॥ निचितेत्यादि ॥ हे कुन्दसमानदन्ति । नीरदैः उपेत्य खं निचितं ॥ कुन्दानां पुष्पाणि कुन्दानि तैः समाना दन्ताः ताम्बूलाभावाद्विरहिण्याः । आगत्य गगनं व्याप्तं । सरसैर्मेघैः खमिव तव नायकः सरसस्त्वामाश्वासयिष्यतीतिभावः ॥ भर्तृहीनानां हृदयलक्षणापृथ्वीतद्रदैः । रदविलेखने । विदारकैर्मेघैः ॥ किंच । सलिलैर्जलैः क्षितौ रजः निहितं स्थापितं क्षिते रजइत्यर्थः ॥ रजसः पूर्वविस्तृतत्वादिदानीं तत्स्थापने सुखमागमिष्यतीति ध्वनितं ॥ किंच रविचन्द्रौ न दृष्टौ जनैरितिशेषः ॥ अपिना तेजसित्वबोधः ॥ मेघैराच्छादितत्वान्नभस्तयोश्च ॥ अनेन सर्वथा पथिकयोस्तयोरपि निजप्रेयसी समाश्वासनाय गमनं प्रतीयते । तद्वत्त्वाश्वासनाय सोप्यागमिष्यति शीघ्रं चिरपथिक इति ध्वनिः ॥ तयोश्चोदयारता-

ज्ञाने रतासक्तकामिनां रात्रिदिनाज्ञानमित्यपिध्वनिः ॥ अन्यसुरतदर्शनं स्वस्येच्छोत्पादकमतस्तयोस्तदर्थगमनं ज्ञात्वा तत्रापि पतिरचिरमागमिष्यतीतिध्वनिः ॥ षड्विषमेष्टौसमेकलां इतिलक्षणाद्वैतालीयंछन्दः ॥ १ ॥

**हंसा नदन्मेघभयाद्द्रवन्ति निशामुखान्यद्य न चन्द्रवन्ति ॥ नवाम्बुमत्ताः शिखिनो नदन्ति मेघागमे कुन्दसमानदन्ति ॥ २ ॥ मेघावृतं निशि न भाति नभो वितारं निद्राभ्युपैति च हरिं सुखसेवितारं ॥ सेन्द्रायुधश्च जलदोधरसन्निभानां संरंभमावहति भूधरसन्निभानाम् ॥ ३ ॥**

किंच अद्यमेघागमे हंसा नदन्मेघः गर्जन्घनः तद्भयाद्द्रवन्ति पलायंति मानससरसि अनेन तिर्य्यंचोपि कान्तासंङ्गाय गच्छन्ति किं त्वदीयो मनुष्य इति ध्वनिः ॥ अद्य रात्रेर्मुखानि प्रदोषा न सचन्द्राः सोऽपि कान्ताश्वासनाय गतः किंच मयूराः नवजलमत्ता हृष्टाः शब्दायन्ति॥ नच मयूराः स्वकान्ता आकारयन्ति त्वदीयोऽप्याकारयिष्यतीति ध्वनिः । तेन मम गमनासामर्थ्ये किमाधिक्यमिति वाच्यं ॥ ते वयमागच्छाम इति वदन्तीति ध्वनेः ॥ इन्द्रवज्रेयं ॥ २॥ हेकुन्दसमानदन्ति । रात्रौ मेघैर्व्याप्तं खं न शोभते तारारहितत्वात् । अचेतनं गगनमपि ताराभावाद्यथा तथा त्वदीयोपि त्वां विना न शोभते ॥ किंच निद्रा हरिं प्राप्नोति

वर्षाणां तच्छयनकालत्वात् । सुखसेवितारं । सुखस्य सेविता सुखसेविता तं जनपालनादिव्यासंगं विमुच्य सोपि लक्ष्मीसहितस्सुखी तथा तत्रापि रसिकः ॥ अन्यच्च मेघोऽधः असन् जलं स्रवन् इभानां गजानां क्रोधं जनयति । सेन्द्रायुधः सधनुः भूधरसन्निभानां तेन प्रोषितेभानां मध्ये सकोपोपि सविरहः सन्नागमिष्यतीति ध्वनिः ॥ प्रतिदन्ति गर्जनभ्रान्त्या वा । वसन्ततिलकेयं ॥ ३ ॥

**सतडिज्जलदार्पितं नगेषु स्वनदम्भोधरभीतपन्न गेषु ॥ परिधीररवं जलं दरीषु प्रपतत्यद्भुतरूपसु न्दरीषु ॥ ४ ॥ क्षिप्रं प्रसादयति सम्प्रति कोपि तानि कान्तामुखानि रतिविग्रहकोपितानि ॥ उत्कंठयन्ति पथिकान् जलदास्स्वनन्तः शोक स्समुद्भवति तद्वनितास्वनन्तः ॥ ५ ॥**

हेकुन्दसमानदन्ति । सतडिज्जलदार्पितं जलं परिधीररवं परितः गम्भीरशब्दं यथास्यात्तथा क्रियाविशेषणं वा दरीषु प्रपतति वहति । यद्वा तडिद्भिस्सह विद्यमाना ये मेघास्तैरर्पितं मुक्तं जलं नगेषु दरीषु च।अनेन जलदानां नायकत्वं व्यज्यते-विद्युल्लतानां नायिकात्वं च अतस्सोऽपि तानेवमवलोक्याग-मिष्यतीति ध्वनिः ॥वसन्तमालिकेयं ॥ औपच्छन्दसिकमिति-वा ॥४॥हेकुन्दसमानदन्ति । सम्प्रति वर्षर्तौ कोपीति जात्येकव चनं तानि रतिविग्रहकोपनत्वेन सौन्दर्य्यातिशयशालित्वे

न प्रसिद्धानि । कान्तामुखानि मानिनीवदनानि क्षिप्रं शीघ्रं प्रसादयति प्रसन्नीकरोति ।अस्मिन्वर्षतौ मानिनीकोपमुत्पाद्यानुनयतीति यावत् । अतस्सोपि त्वत्प्रसादनार्थमागंतेति व्यज्यते ॥ कथंभूतानि रतिविग्रहकोपितानि सुरते प्रीतिकलहेन कोपःसंयातो येषां तानि किञ्च स्वनन्तो गर्ज्जन्तो मेघाः पांथानुत्कंठयन्ति उत्कंठावतः कुर्वन्तीत्यर्थःतेन नायको हि त्वद्दर्शनोत्कंठित आगन्तेति ध्वनिः ॥ किञ्च तद्वनितासु अनन्तः महान् शोकः विरहदुःखं समुद्भवति उत्पद्यते अनेनत्वन्नायकस्त्वद्विरहमसहमान आगंतेतिध्वनिः । वसन्ततिलका ॥ ५ ॥

**छादिते दिनकरस्य भावने खाज्जले पतति शो कभावने ॥ मन्मथे च हृदि हन्तुमुद्यते प्रोषित प्रमदयेदमुद्यते ॥ ६ ॥ सर्वकालमवलंघ्यतोय दा आगतास्थ दयितो गतो यदा ॥ निर्घृणेन प रदेशसेविना मारयिष्यथ ह तेन मां विना ॥ ७ ॥**

एवं सहचर्याश्वासिता नायिका मेघानाह। छादित इति। दिनकरस्य भावने दीप्तिवने वृक्षसमुदायवाचिनो वनपदस्य समूहे लक्षणा ॥ छादिते सति मेघैरितिशेषः । गगनाद्वारिणि पतति सति शोकस्य भावने उत्पादके कामे हृदि हंतुं पीडायितुमुद्युक्ते सति देशांतरगतभर्तृकया इदं वक्ष्यमाणं उद्यते उच्यते । मेघान्प्रतीति शेषः ॥ रथोद्धता ॥ ६ ॥

किमुवाच । हेमेघा यूयं सर्वकालमवलंघ्य दयितगमनव्यतिरिक्तं अतिक्रम्य यदा प्रेयान् प्रोषितस्तदा आगतास्थ प्राप्तास्थ । मध्यमपुरुषबलाद्यूयमित्यध्याहार्य्यं ईदृशाः परोपकारनिरता भवन्तोऽधुना मयि निर्घृणेन निर्द्दयेन निर्लज्जेन वा अतएव परदेशसेविना विना मां मारयिष्यथ । ह इति कष्टे अयमप्यपकारस्तस्य कर्त्तव्यापकारकारित्वात् ॥ मारयिष्यथ नतेनेतिपाठे काकुः न मारयिष्यथ किं अपितु मारयिष्यथैव ॥ इयं रथोद्धता ॥ ७ ॥

**ब्रूत तं पथिक पांशुलं घना यूयमेव पथि शीघ्रलंघनाः ॥ अन्यदेशरतिरद्य मुच्यतां साथ वा तव वधूः किमुच्यतां ॥ ८ ॥ हंसपंक्तिरपि नाथ सम्प्रति प्रस्थिता वियति मानसम्प्रति ॥ चातकोपि तृषितोऽबु याचते दुःखिता पथिक सा प्रिया च ते ॥ ९ ॥**

हे घनाः युयमेव तं कान्तं ब्रूत उपदिशत । पथिकेषु पांशुलं पांशून्दोषान् लाति अङ्गीकरोतीति पांशुलः मलिनः अधम इतियावत् । तं पांथाधमसित्यर्थः । एतादृशंप्रति उपदेश आवश्यकः । अस्मास्वेवबहूक्तः प्रार्थनादरः किमिति चेत् । किंभूता यूयं पथि शीघ्रलंघनाः । लंघनं गमनं येषांते । अन्यस्य स्थिरतया गमनकालविलम्बेन भवतः प्रेषणमुचितत्वाद्युक्तः प्रार्थनादरः ॥ तत्र गत्वा किं वक्त-

व्यमिति चेत्तत्राह । भोपथिक अद्य वर्षर्त्तौ अन्यदेशप्रीति-र्मुच्यतां त्यज्यतां शीघ्रं स्वदेशं गन्तव्यमित्यर्थः अथवा तव वधू अस्माभिः किमुच्यतां वक्तुं न शक्येत्यर्थः । अ-निर्वाच्यां दशां प्राप्तेति भावः । यद्वा सा किं वदतु अस्म-दुक्तमेव कर्त्तव्यं ॥ रथोद्धता ॥ ८ ॥ भोनाथेति सम्बोध-नं । सम्प्रति वर्षर्त्तौ हंससमुदाया मानसं सरः प्रति आ-काशे प्रस्थिताः । तिर्य्यंचोऽपिकान्ताश्वासनाय गच्छंती-तिभावः ॥ किंच चातकः पक्षी अपि तृषितो जलं याचते जलधारामित्यार्थिकद्वितीयं कर्म ज्ञेयं ॥ यद्वा अम्बु अमृतं चातकः कान्ताधरामृतपानं याचते । प्रियां प्रतीतिशेषः त्वन्तु अधरपानार्थप्रेरितोऽपि न गच्छसि महती शृङ्गारान-भिज्ञा न तेत्युपहास्योऽपि । किंच भो पथिक सा ते प्रिया दुःखिता च यदि सा तर्हि प्रिया आश्वासनीयेत्यनेन मन्म-थपीडया दशमीदशामाप्तकामा दुःखकारणं तिर्य्यंचोपि प्रियामाश्वासयति ॥ मनुपित्रा अनभिज्ञाय सस्नेहत्वं दत्तं अ-भिज्ञाय निःस्नेहत्वमिति स्मर्य्यमाणा दुःखिता ॥ रथोद्धता ९

**नीलशष्पमभिभाति कोमलं वारि विन्दति च**
**चातकोमलं॥ अम्बुदैः शिखिगणो विनाद्यते का**
**रतिर्दयितया विनाऽद्य ते ॥ १० ॥**

किंच भो पथिक कोमलं सुन्दरं हरितबालतृणं अभि-भाति समन्ताच्छोभते । भूमावितिशेषः ॥ नन्वत्र बालतृण

शब्देन नीलस्यैव बोधादन्यद्वैयर्थ्यं तथापि नीलपदं वर्षर्त्तुज्ञापनाय। अचेतनतृणकोमलत्वेन च कठिनत्वेन हीनता तेन मार्गमंजुलत्वं च सूचितं। किंच चातक उदकं अमलं मलहीनं विन्दति लभते चातका घनमुक्तमुदकमन्तरीक्ष एवाददते। अतस्तत्र भूमिसम्बन्धाभावान्निर्म्मलत्वं चातका अस्मानिच्छंति उदकन्तदर्थं वयमागताः॥ त्वदागमनपरीक्षिणीं त्वं न गच्छसीत्यतोऽधमत्वं तवेति ध्वनिः। किंच अम्बुदैर्मेघैर्मयूरसमुदायो निनाद्यते शब्दं कुर्विति प्रेर्य्यते अस्मद्गर्ज्जने मयूरा नृत्यंतीति मेघानां कारणता नादे। मयूराणां मंजुलनादोत्सादकैरस्माभिरेव प्रेर्य्यमाणो गच्छ नोचेन्मयूरनादोत्तरं दुःखितो भूत्वा यास्यसीति विभीषिकोक्तिः। किंचाद्य कान्तया विना तव का रतिः सुखं न कापीति भावः॥ एवं दुःखी भूत्वा तिष्ठसि चेदति धैर्य्यगुणस्त्वयि। रथोद्धता॥ १०॥

मेघशब्दमुदिताः कलापिनः प्रोषिताह्रदयशो
कलापिनः॥ तोयदागमकृशापि साद्य ते दुर्द्ध
रेण मदनेन साद्यते॥ ११॥ किं कृपापि तव
नास्ति कान्तया पाण्डुगण्डपतितालकान्तया
॥ शोकसागरजलेऽद्य पातितां त्वद्गुणस्मरणमे
व पातितां॥ १२॥

किंचाद्य कलापिनो नृत्यन्मयूरामेघशब्दमुदिता घनग

र्जितसंतुष्टाः प्रोषितानां हृदये शोकलापिनः देशांतरगत भर्तृकाणां नायिकानां हृदयेषु संतापकारका ये मयूराः ॥ यद्वा हृदयशोकं लपंति भाषन्ते अतस्तदवस्थां ज्ञात्वा गन्तव्यं । भोपथिक ते सा विरहानलव्याकुला प्रिया मेघागमकृशापि दुःखेन धर्तुमशक्येन मदनेन पीड्यते यद्वा तोयदागमे वर्षतौ कृशापि एतादृशीमपि मदनः पीडयति तत्परिहारार्थं त्वं व्रज । देवो दुर्बलघातक इति मदनस्यापि दयाभावः ॥ त्वं तथा मा भवेति सामोपायः । रथोद्धता ॥ ११ ॥ भो पथिक तव कान्तायां कान्तयेति विवक्षातः कारकाणि कारक इति वचनादधिकरणाविवक्षया तृतीयान्तेन कान्तायामित्यर्थः । करुणापि नास्ति निर्दयस्य ते दयाभावात् । सदयेन तु गतमेव स्यात् । यमकभंगभयात्कान्तयेति केचित् । तन्न । कवेरसामर्थ्यापत्तेः ॥ कथंभूतया पाण्डू विरहेण गण्डौ तयोः पतिता इतस्ततो विस्तृताः साधनाभावात् केशांता यस्याः एतादृशि प्रेम्णि विरहावस्थायां जीवने हेतुमाह । अद्य त्वद्गुणानां स्मरणमपि सदयो मयि प्रीतिसान्द्रोऽद्युनागमिष्यत्येवेति स्मरणं तां रक्षति । शोकसागरजले निपातितां शोकसमुद्रस्तज्जलमिवेत्युपमानांतत्वात्त्वद्विरहेणेतिशेषः । समुद्रमपि गुणेन रज्ज्वा तरति । रथोद्धता ॥ १२ ॥

**कुसुमितकुटजेषु काननेषु प्रियरहितेषु समुत्सु**

**काननेषु ॥ वहति च कलुषे जले नदीनां किमि ति च मां समवेक्षसे न दीनां ॥ १३ ॥**

पुनरपि तं मत्संदेशं ब्रूतेत्याह ॥ हेकान्त त्वं मां किमिति कस्मात्कारणान्न समवेक्षसे संपश्यसि केषु सत्सु काननेषु वनेषु । कुसुमानि संयतानि येषां ते तादृशाः कुटजाः वृक्ष-विशेषाः ॥ कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरिति प्रकाशः । येषुतानि तादृशेषु सत्सु । पुनः केषु सत्सु काननेषु वनेषु प्रियरहितेषु । कामिनीजनेष्वितिशेषः ॥ किंभूतेषु कामिनी जनेषु समुत्सुकाननेषु समुत्सुकानि निजकान्तेषूत्कंठितानि आननानि येषां तेषु इदमपि स्वाभिप्रायेण तस्मात्कामिनी-मुखस्य यथानुत्कंठितत्वं भवति तथा विधेयं ॥ यद्वा प्रिये-ति भर्तृपदेन सम्बोधनं । अत्र पक्षे पूर्ववत्कुसुमितं इति सप्तम्यंतं लापयित्वा अग्रिमपदानि काननविशेषणानि । किं-भूतेषु काननेषु कस्य जलस्य । कं शिरो जलमाख्यात-मित्येकाक्षरनिघंटुः । आननानि मुखानि आधारत्वात् स्था-नानि इति यावत् । तेषु काननेषु सजलेष्वित्यर्थः । पुनः किम्भूतेषु काननेषु समुत्सु मुदा प्रीत्या घटितेषु । पुष्पाणां विकसनेन हास्यनिवेदकत्वं । पुनः किंभूतेषु काननेषु र-हितेषु वियुक्तेषु । कामिनीजनैरितिशेषः । अनेन वनानां जलाद्यनेकगुणशोभितत्वात्कामिन्यादिजनराहित्यमात्रेण शोभा माभूदिति त्वदागमनेन च तद्वने क्रीडावशादस्म-

त्सान्निध्येन सर्वापि शोभा सम्पत्स्यते इत्यवश्यमागन्तव्य मिति स्फुट एवाशयोऽभिव्यज्यते । यद्वा केषु सत्सु कामिनी जनेषु काननेषु अधिकरणसप्तमीयं । समुत्सु मुदासहवर्त्तमानेषु सत्सु अनेन यथा स्वभर्तृभिः सहिताः कामिन्यः काननादौ क्रीडन्ति तथाऽहमपि त्वदागमने भविष्यामीति सत्वरमागन्तव्यमित्याशयोपि व्यंग्यः । किंभूतेषु काननेषु कुसुमितकुटजेषु । अनेन काननानां भोगयोग्यत्वं सूचितं । किंभूतेषु कामिनीजनेषु काननेषु केन सुखेन युक्तानि आननानि येषां तेषु । मध्यमपदलोपिसमासात । वियोगाभावात्सुखितानीत्यर्थः । यद्वा केन जलेन युक्तान्याननानि येषां तेषु विपरीतसुरतश्रमस्वेदबिन्दुयुक्तानि । पावके च मयूरे च सुखे शीर्षे जले च कं । पुनः किम्भूतेषु कामिनीजनेषु प्रियरहितेषु सर्वेषु सुन्दरत्वात्सर्वेषां प्रियः कामस्तज्जोरः अग्निस्तत्र हितेषु सुखरूपेषु मदनजनिततापशान्त्यर्थं कामिनीजन एव सुखावह इत्यर्थः । यद्वा प्रियाणां भर्तृणां रः संतापः अर्थान्मदनजन्य इत्यर्थः । तत्र हितोभर्तृणां संतापशान्त्यर्थं कामिनीजन एव हितः सुखकारी समर्थः । यद्वा प्रियाणां रः कामः तत्र हितो भर्तृणां शरीरालिङ्गने सुखावह इत्यर्थः । 'रश्च कामेऽनले सूर्ये' इति निघंटुः । पुनः कस्मिन्सति नदीनां कलुष आविले बहुले जले वहति सति यथा नदीभिः स्वकांतं प्रति

गम्यते तथा त्वमपि गच्छेत्याशंक्याह । किंभूतां मां दीनां सर्वेषां सुखवशात् स्वस्य विरहात्॥ पुष्पिताग्रावृत्तिः॥१३॥

**मार्गेषु मेघसलिलेन विनाशितेषु कामे धनुः स्पृशति तेन विना शितेषु ॥ गम्भीरमेघरसितव्यथिता कदाहं जह्यां सखि प्रियवियोगजशोकदाहं १४**

साम्प्रतं काचित्सखीमाहानंगबाणाकुलांगी । हे सखि अहं प्रियवियोगाज्जातं शोकाग्निं कदा जह्यां त्यजेयं । केषु सत्सु जलदमुक्ततोयेन मार्गेषु पथेषु विनाशितेषु रुद्धेषु । अनेन एतावत्कालं तदागमनाशयास्थितमधुना तु नदीपूर्णत्वात्पंकाकुलत्वाच्च मार्गाणां विषमत्वे तदागमनाभावबोधात्कथं शोकनाशः । तदभावे दशमदशाप्राप्तितिध्वनिः । कस्मिन्सति तेनेत्यनेन निर्दयत्वबोधः भर्त्रा विना कामो धनुः स्पृशति सज्यं कुर्वति । मां लक्षीकृत्येतिशेषः किम्भूतं धनुः शितेषु शितः तीक्ष्ण इषुर्यस्मिन् तथा । किम्भूताहं गम्भीरं यन्मेघस्य रसितं घनगर्जितं तेन व्यथिता व्यथा संजाता यस्याः सा दुःखितेत्यर्थः । वसंततिलकेयं ॥ १४ ॥

**सुसुगंधतयावनेजितानां स्वनदम्भोधरवायुवीजितानां ॥ मदनस्य कृते निकेतकानां प्रतिभान्त्यद्य वनानि केतकानां ॥ १५ ॥ तत्साधु यत्त्वां सुतरुः ससर्ज प्रजापतिः कामनिवास सर्ज॥त्वं मंजरीभिः प्रवरो वनानां नेत्रोत्सवश्चासि सयौवनानां॥१६॥**

पुनरपि सखीं मेघसमक्षमाह ॥ हे सखि अद्य केतकाना केतकीपुष्पाणि केतकानि तेषां वनानि समूहाः प्रतिभांति शोभन्ते। संप्रति भानिवाभवंति। परपीडाकरणे धृष्टानि। कीदृशानां केतकानां सुतरां सुगंधीनि तेषां भावस्तत्तथा तया अवनेजितानां व्याप्तानां वने अजितानामिति पदच्छेदे वने अजितानां सर्वोत्कृष्टत्वादन्यपुष्पैरपराजितानां पुनः किंभूतानां स्वनन्तो गर्ज्जन्तो ये मेघास्तत्संबंधिवायुना वीजितानां। ईषत्कंपितानां। पुनः किंभूतानां मदनस्य कृते कामार्थं निकेतकानां गृहाणामित्यर्थः। कितनिवासे निकेतयंति निकेतनानि मदनस्ते शरीरशीतलगृहेषु स्थित्वा परान्पीडयति अतस्तवेयं कीर्त्तिः। वसन्तमालिकेयं वृत्तिः॥१५॥

इदानीं प्रस्तुतं विहायाप्रस्तुतं तरुं कामव्यामोहात् प्रार्थयते। भोकामानिवास कन्दर्पनिलय सर्ज शालसालेतुसर्जके।प्रजापतिर्वेधाः सुतरु त्वां ससर्ज सृष्टवान् तत्साधु युक्तं। सुतरुत्वंदर्शयति। यतः कारणात् त्वं मंजरीभिर्वल्लरीभिर्वनानां प्रवरः श्रेष्ठोसि। चेत्यपरं सयौवनानां अनेन पुंस्त्रीग्रहणं। नेत्रोत्सवः आनन्दजनकत्वात्। नेत्राणामुत्सवः उद्भवः ईदृशस्य तव मत्पीडाजनकत्वमनुचितमिति भावः। यद्वा श्रेष्ठस्य तव न स्वतो मत्पीडाजनकत्वं किंतु कामसंगत्येति ध्वनिः॥ उपजातिछन्दः॥ १६॥

**नवकदम्ब शिरोऽवनतास्मि ते वसति यन्मदनः**

**कुसुमस्मिते ॥ कुटज किं कुसुमैरुपहस्यते निप तितास्मि सुदुःप्रसहस्य ते ॥ १७ ॥ तरुवर विनतास्मि ते सदाऽहं हृदयं मे प्रकरोषि किं सदाहं ॥ तव कुसुमानिरीक्षणे पदेहं विसृजेयं सहसैव नीप देहं ॥ १९ ॥**

हे नवकदम्ब अहं तुभ्यं शिरोऽवनतास्मि कृतनमस्कारेत्यर्थः। यद्यस्मात्कारणात्ते पदमत्रापि योज्यं तव कुसुमस्मिते पुष्पैर्विकसिते त्वयि मदनस्तिष्ठति दुष्टसंगान्मम पीडा माऽदाः। अथवा नवस्य बालस्य परपीडाजननेऽविवेकिनः कदम्बस्य कुमातृकस्य दुष्टसंगिनो दुःखजननं सुयुक्तमेव। हे कुटज कुसुमं कृत्वा किं उपहस्यते त्वया मामेव दुःखं दत्त्वा मामेवोपहससीति महदौचित्यमित्याशयः। अतः सुदुःप्रसहस्य सुतरां सोढुमशक्यतेति पतितास्मि। कृतनमस्कारास्मि अतो मा यच्छ दुःखं। द्रुतविलंबितं छन्दः ॥ १७ ॥ इदानीं नायिका निर्दयं प्रार्थयते। हे तरुवर अहं ते तुभ्यं सदा निरंतरं विनतास्मि एवं सत्यपि मे हृदयं किमिति संदाहं सतापं करोषि। अत्यन्तकृतघ्नस्त्वमिति भावः ॥ भो नीप कदम्ब अहं तव कुसुमनिरीक्षणे पदे त्वत्पुष्पदर्शनपदे स्थाने सहसाऽकस्मादेव देहं विसृजेयं। यद्वा त्वत्पुष्पनिरीक्षणे स्थाने एव देहं त्यजेयमत अनुचितमिति भावः। अत्रानुक्तगाथाछन्दः ॥ १८ ॥

**कुसुमैरुपशोभितां सितैर्घनमुक्तांबुलवप्रकाशितैः ॥ मधुनस्समवेक्ष्य कालतां भ्रमरश्चुम्वति यूथिकालतां ॥ १९ ॥ तासामृतुः सफल एव हि या दिनेषु सेन्द्रायुधाम्बुधरगर्जितदुर्दिनेषु ॥ रत्युत्सवं प्रियतमैः सह मानयंति मेघागमे प्रियसखीश्च समानयंति ॥ २० ॥**

स्वयं पुनर्विलपति ॥ यद्वा सखी वदति । भ्रमरो भृङ्गो यूथिकाना लतां चुम्बति तत्रैवासक्तो भवतीत्यर्थः । किं कृत्वा मधुनः पुष्परसस्य कालतां समयतां समवेक्ष्य ज्ञात्वा अनेन भ्रमरोपि मधुपानसमयमिति ज्ञात्वा सक्तो मन्नायिकापेक्षयाभिज्ञ इत्यर्थध्वनिः । सितैः श्वेतैः पुष्पैरुपशोभितां अनेन भ्रमररूपप्रियचुंबनादेतस्याः पुष्पच्छलाद्धास्यं व्यंग्यं । घनैर्मुक्ता ये अम्बुलवा जलकणास्तैर्विकासितैरन्योऽपि कश्चिद्रसिको भूषणादिभिरलंकृतां कान्तां चुम्बतीति ध्वनिः । वेतालीसुन्दरी छन्दः ॥ १९ ॥ पुनरपि सखिं वदति ॥ ऋतुः अर्थाद्वर्षर्तुः तासां सुन्दरीणां हि निश्चये सफलस्ससार्थक एव तासां कासां या इन्द्रायुधेन वर्त्तमानाये मेघास्तेषां गर्जितानि तैर्दुर्दिनेषु मेघच्छन्नवाचकं दुर्दिनपदं छन्नमात्रेलाक्षणिकं प्रियतमैः कामिभिः सह रत्युत्सवं मानयंति पूजयंति अनुभवन्ति । किञ्च मेघागमे प्रियास्ताः सख्यश्च तास्ताः समानयंति आत्मतुल्याः कुर्वंति आत्मवद्भू-

षणादिभिर्भूषयंतीत्यर्थः । यद्वा मानेन आदरेण सह वर्त्त-न्ते यास्तादृशाः कुर्वन्तीत्यर्थः । अभिमानिकामिनोरानयने संतोषात् स्वभूषणदानमुचितमेवेति भावः । अनेन प्रियानयनं सखीकार्य्यं भवत्यतः सभूषणस्त्वया स आनेयस्त्वामलंकरिष्यामीत्यर्थध्वनिः ॥ २० ॥

एतन्निशम्य विरहानलपीडितायास्तस्या वचः
खलु दयालुरपीडितायाः ॥ स्वं स्वारवेण कथि
तं जलदैरमोघैः प्रत्याययौ स गृहमूनदिनैरमो
घैः ॥ २१ ॥ आलम्ब्य चाम्बु तृषितः करकोष
पेयं भावानुरक्तवनितासुरतैः शपेयम् ॥ जीयेय
येन कविनायमकैः परेण तस्मै वहेयमुदकं घ
टकर्परेण ॥ २२ ॥

एवं विलपंत्यां तस्यां स नायकः ऊनदिनैरल्पादिवसैर्गृहं निजमितिशेषः । प्रत्याययौ आजगाम । किं कृत्वा एतत्पूर्वोक्तं विरहानलेन पीडितायास्तस्याः प्रियायाः जलदेन स्वारवेण स्वशब्देन स्वं आत्मानं प्रति कथितं उक्तं वचस्सन्देशं निशम्य श्रुत्वा किंभूतायास्तस्याः अपीडितायास्तत्प्राप्ताविति शेषः किंभूतः सः दयालुः मेघवचनेन तत्कालमागमनात् । किंभूतैः ऊनदिनैर्मोघैरमोघैश्च तदनागमनागमनाभ्यां निष्फलैः सार्थकैश्च । केचिदिदं पद्यं कवेर्मेति वदंति ॥ २१ ॥ इदानीं काव्यकर्त्ता स्वकाव्ये

यमकनिपुणतामाकलय्य प्रतिज्ञां दर्शयितुमाह ॥ भो शिष्य अहं येन परेण द्वितीयेन कविना नत्वन्येन यमकैः जीयेय पराजयं प्राप्स्यामि शब्दालंकारैः तस्मै कवये ध्वस्तकुम्भकपालेन उदकं वहेयं प्रापयेयं दुष्करमपि करिष्यामि। ननु त्वं जितोपि तथा न करिष्यसीतिचेच्छपथमाह । यदि न वहेयं तर्हि भावेन चित्ताभिप्रायेणानुरक्ता याः कांतास्तासां सुरतैः शपथं कुर्य्याम्। किं कृत्वा तृषितः सन् करकोशकुड्मलोऽञ्जलिः तेन पेयं पातुं योग्यं जलं आलंब्य स्पृष्ट्वा अन्योऽपि जलं स्पृष्ट्वैव शपथं करोतीति भावः। यो हि यत्प्रियो भवति स तच्छपथं करोतीति स्वस्यातिरसिकत्वेन तत्प्रियत्वात्तच्छपथे इत्यादरः। नच तव यमकाख्यकाव्ये ज्ञानमेवेति न्यूनता वाच्या कविनेत्युक्तत्वात्। यः कविस्तेन तु यमकादौ जेतव्योस्मि शास्त्रेतु शास्त्रज्ञैरित्यलं विस्तरेण ॥ २२ ॥ इति घटकर्परं समाप्तम् ॥

श्रीः ।

श्रीवेंकटेश्वर छापखानेके—

# विक्रयार्थ पुस्तके—

## वेदान्तग्रंथाः ।

| नाम. | की. रु. आ. | ट. म. रु. आ. |
|---|---|---|
| १ शारीरक ( शांकरभाष्य ) रत्नप्रभाटीका व्यासाधिकरणमाला और भक्तिसूत्र सभाष्य अक्षर बडा .... | १०—० | १—० |
| २ ब्रह्मसूत्र(शारीरक)भाषाटीका | १—८ | ०—३ |
| ३ वेदांतसार संस्कृतमूल और संस्कृतटीका तथा भाषाटीकासहीत .... .... | ०—१२ | ०—२ |
| ४ गीता चिद्घनानंदस्वामिकृत गूढार्थदीपिका मूल अन्वय पदच्छेदके सहित भाषाटीका | ८—० | १—० |
| ५ गीता आनंदगिरिकृतभाषाटीका .... .... .... | ३—० | ०—६ |
| ६ श्रीमद्भगवद्गीता सान्वयब्रजभाषा दोहासहित .... | १—४ | ०—३ |
| ७ गीता अमृततरंगिणी भा- | | |

| नाम. | की. रु. आ. | ट. म. रु. आ. |
|---|---|---|
| षाटीका( रघुनाथप्रसादकृत ) | १—४ | ०—३ |
| ८ पंचदशीसटीक .... .... | २—८ | ०—४ |
| ९ प्रश्नोत्तररत्नमाला .... | ०—२ | ०—॥ |
| १० अध्यात्मप्रदीपिका .... | ०—४ | ०—॥ |
| ११ निर्वाणाष्टकंसटीकम् .... | ०—२ | ०—॥ |
| १२ सिद्धांतचंद्रिका सटीक वे-दांत .... .... .... | ०—८ | ०—१ |
| १३ प्रश्नोत्तरप्रकाश .... .... | ०—४ | ०—॥ |
| १४ हरिमीडेस्तोत्रसटीक .... | ०—१४ | ०—२ |
| १५ द्वादशमहावाक्यविवरण | ०—४ | ०—॥ |
| १६ त्रोटक सटीक .... .... | ०—१० | ०—१ |
| १७ शांकरदिग्विजय सटीक.... | ३—० | ०—८ |
| १८ हठयोगप्रदीपिकाभाषा औ-र संस्कृतटीकासह .... | २—० | ०—४ |
| १९ शिवस्वरोदय भाषाटीका | ०—१० | ०—२ |
| २० शिवसंहिता भाषाटीका सह ( योगशास्त्र ) .... .... | १—० | ०—२ |
| २१ वेदांतरामायण भाषाटीकासह | १—८ | ०—६ |
| २२ अष्टावक्रगीता भाषाटीकासह | १—४ | ०—२ |
| २३ श्रीरामगीता भाषाटीका पद प्रकाशिका अनुवादसमुच्चय | | |

| नाम. | की. रु. आ. | ट. म. रु. आ. |
|---|---|---|
| और विषमपदीके सहित | ०–८ | ०–१ |
| २४ अपरोक्षानुभुति संस्कृत टीका भाषाटीका सहित .... | ०–१० | ०–१ |
| २५ वेदांतग्रंथपंचकम् ( वाक्यप्रदीपः वाक्यसुधारसः हस्तामलकः निर्वाणपंचकं मनीषापंचकं ) सटीक .... .... | ०–८ | ०–१ |
| २६ वेदस्तुति भाषाटीका सह | ०–८ | ०–१ |
| २७ रामगीता मूल .... .... | ०–२ | ०–॥ |
| २८ श्रीमद्भगवद्गीतापंचरत्नअक्षरमोटागुटकारेश० .... | १–४ | ०–४ |
| २९ "पंचरत्न अक्षरबडा खुलापाना छोटीसंची .... | १–८ | ०–३ |
| ३० "पंचरत्न अक्षरबडा लंबीसंची खुला .... .... | १–० | ०–३ |
| ३१ गीता श्रीधरीटीका सहित | १–४ | ०–३ |
| ३२ गीता बडे अक्षरकी १६ पेजी गुटका .... .... | १–० | ०–२ |
| ३३ "पंचरत्न बुक्फासन सप्तरत्न | ०–१२ | ०–२ |
| ३४ गीता बडेअक्षरकी खुली.... | ०–१२ | ०–२ |

# श्रीवाल्मीकीयरामायण-भाषाटीकासह।

सर्वविद्यानुरागियोंको सूचना करनेमें आताहै कि हमनें श्री-महर्षि वाल्मीकिजीकी वाल्मीकीयरामायण भाषाटीका सहित और केवल भाषा मात्र दो प्रकारसे छापी है। इसका कारण यह है कि "बहुतसे भाषारसिकोंके पत्र हमारे पास आये कि जैसे आपने श्रीमद्भागवत भाषाटीका छापी है. यदि इसी प्रकार मूल श्लोक और भाषाटीका युक्त वाल्मीकीयरामायण छापो तो आपका बड़ा भारी उपकारहो और यश हो तथा जो अल्प पढे हैं उनकी इसकी सहायतासे जीविकाका निर्वाह निकल आवे" बस इन प्रेरितपत्रोंके देखतेही अति उत्साह पूर्वक इसके छापनेका प्रारंभ कर दीना. जिसको सुप्रसिद्ध विद्वद्वर पंडित श्रीज्वालाप्रसादजीने प्रत्येक श्लोकका आनुपूर्वी सरलभाषामें अनुवाद करा है. कि जिसको अल्प पढाभी सहजमें कथा वांच सक्ताहै और जहां तहां दृष्टांत राग रागिणी आदि जो प्रायः आज कलके पौराणिक कहा करतेहैं सामिल करदिये गयेहैं. बहुत बढिया कागज़ स्याही और मोटा स्पष्ट टाइप तो आप इस छापेका जानतेही हो कि दर्शन करतेही चित्त प्रसन्नहो जावे. जो महाशय इसको लेनेंचाहें. उन्होंको अश्विनशुक्ल विजयदशमी तक २० रुपैयेमें दी जायगी. इस्के उपरांत कीमत अधिक होजायगी.

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास

"श्रीवेङ्कटेश्वर" छापाखाना

मुम्बई.